त्वं तत्र गच्छ। इदानीं सत्वरं धाव। सत्यं वद। पत्रं लिख। फलं तत्र नय।

ब्रूहि, स इदानीं कुत्र गतः? वद, त्वमधुना किं पठसि? चक्रं भ्रामयेदानीम्। अधुना धाव। फलं शीघ्रं खाद। रामस्य शोभनं पुस्तकं कृष्णस्य गृहं नय। तव रक्तं वस्त्रं कः पश्यति? मम पीतं वस्त्रं शीघ्रं तत्र नय। अत्रैवोपविश। इदानीमहमत्रैव तिष्ठामि, त्वं शीघ्रमत्रा गच्छ। तं तस्य गृहं प्रापय। मम पत्रं तत्र नय। तस्मा-देकं पत्रं देहि। तं देशं गच्छ। अधुना ब्रूहि, त्वया किमुक्तम्? स कदापि युक्तं न वदति। अहं सदा युक्तं सत्यमेव वदामि गृहस्य समीपं स लिखति। स इदानीं वने वृक्षस्य समीपं तिष्ठति। फलं देहि। पुस्तकं नय। पत्रं लिख।

यः शूरः पुरुष इदानीं मम नगरेऽस्ति, स एव तत्राद्य गच्छति। यं त्वं इदानीं तत्र पश्यसि, स एव स भूपः। येन तुभ्यं धनं दत्तं, स एव वीरोऽस्ति। तस्मान्नगरादिदानीं यो मनुष्य आगतः स एव यज्ञ-दत्तशर्माऽस्ति। यस्य पुरुषस्य पुस्तकं त्वं पठसि; स एव मम गृहे इदानीमस्ति। यस्मिन्गृहे स नरोऽस्ति, तद् गृहं कुत्रास्ति? तस्य भूपस्य किं नगरम्?

यदा त्वं तत्र ग मिष्यसि, तदाऽहं त्वां द्रक्ष्यामि। कदा त्वं भूपस्य नगरं गमिष्यसि ? यदा त्वं श्वस्तत्र गामिष्यसि, तदाऽहमपि तत्रैवागमिष्यामि। यदा त्वं फलं खादिष्यसि, तदाऽहमपि फलं खादिष्यामि। यदा रामोऽन्नं पक्ष्यति, तदा त्वमप्यन्नं खादिष्यसि। यदा स पुस्तकं पठिष्यति, तदाऽहमपि पठिष्यामि। यदि त्वं तत्र न गमिष्यसि, तर्ह्यहमन्नमपि न खादिष्यामि। अहं मम गृहमद्येदानीं गच्छामि, त्वं श्वः आगमिष्यसि। कः इदानीं तत्र गमिष्यति ? अहमद्याऽन्नं नैव पक्ष्यामि।

अहमिदानीं धाविष्यामि। त्वं न धाविष्यसि। किं स मम पत्रं तं नरं प्रापयिष्यति ? यदि स नगरं गमिष्यति, तर्हि तव पत्रं प्रापयिष्यति। तत्कथं भविष्यति। तदेवं भविष्यति ! स इदानीं कूपे पतिष्यति। नहि नहि, स इदानीं तस्मिन्कूपे नैव पतिष्यति। पश्य तं, कथं स धावति। त्वं कुत्र पश्यसि !

सूचना-पाठकोंको यदि कुछ वाक्य समझमें नहीं आये, तो वे पूर्व पाठोंमें इन वाक्योंको देख सकते हैं।

## पाठ २५

### संस्कृत—वाचन—पाठः ।

स मध्याह्ने कुत्र गच्छति ? यत्र रामो गच्छति, तत्रैव स गच्छति । त्वं रात्रौ कुत्र गमिष्यसि ? अहं तव गृहं गमिष्यामि । स सायं नैव गमिष्यति, तदा त्वं किं करिष्यसि ?

अहं तव गृहं सायमागमिष्यामि । त्वं मम गृहं सायं सत्वरमागच्छ । सोऽद्य तस्य नगरं गमिष्यति, फलं भक्षयिष्यति । यथा स पुस्तकं पश्यति, तथा पठति । नहि नहि, स पुस्तकं पश्यति, परन्तु नैव पठति । स इदानीं पुस्तकं पश्यति, परन्तु किं न पठति ? त्वं तत्र दिवा किं न गमिष्यसि ? रामचन्द्रो रात्रौ दीपस्य प्रकाशेन पुस्तकं पठिष्यति । त्वं यद्यन्नं पक्ष्यसि तर्ह्यहं स्वादिष्यामि । तस्मिन्वने इदानीं सलिलं शोभनं भविष्यति । तस्मिन्गृहे श्वेतं वस्त्रं नास्ति । कस्मिन्गृहे रक्तं वस्त्रमस्ति ? वद । शीघ्रं ब्रूहि । तव पुस्तकं नवीनमस्ति, परन्तु मम पुराणमस्ति । यदा धनाढ्यः पुरुषो गमिष्यति, तदाऽहमपि गमिष्यामि ।

त्वं कर्म कारिष्यासि किम् ? नहि, अहमद्य नैव करिष्यामि, स कर्म कदा करिष्यति ? यदा त्वं करिष्यसि, तदा स करिष्यति । स मह्यं फलं दास्यति । त्वं मह्यं पुस्तकं नैव दास्यसि किम् ? त्वमिदानीं पुस्तकं तत्र नय अहं तत्रेदानीं नैव गमिष्यामि । अहं श्वो गमिष्यामि । तत्राद्य को गमिष्यति ? प्रायो भूमित्रोऽद्य सायं तत्र गमिष्यति । त्वं पत्रं कदा लेखिष्यसि ? अहं पत्रमधुनैव लिखामि । यदा त्वं पक्ष्यसि, तदा स कुत्र भविष्यति ? यदाऽहमन्नं पक्ष्यामि,तदा स स्वगृह एव भविष्यति । अहं कदापि नैव पतिष्यामि ।

अहमिदानीं तेन सह वदितुमिच्छामि । रामस्तत्र गन्तुमिच्छति । त्वं धनं दातुं नेच्छसि किम् ? स 'इदानीं पत्रं लेखितुं तत्र गतः । त्वं तत्र फलं प्रापयितुं किं न गच्छसि ?'अहं कन्दुकं भ्रामयितुं गतः । अहमिदानीमत्रोपवेष्टुमिच्छामि । सोऽद्य पक्तुं तत्र गमिष्यति । अहमद्य सायं धावितुमिच्छामि । स पुरुषः शोभनमपि फलं खादितुं किं नेच्छति ? स साधुरस्ति । अतो नेच्छति । अहमीशं शरणं गन्तुमिच्छामि । सर्वेश्वरं शरणं गच्छ ।

यदि सोऽद्यात्रागमिष्यति, तर्हि त्वं तत्र न गच्छ ।

नोचेच्छ्वः प्रातरेव गच्छ। किं त्वं पुस्तकं पठिष्यसि? अथवा स पठिष्यति? स सदा प्रभूतं वदति। त्वं वद। नोचेदहं वदिष्यामि। सत्यमप्ययुक्तं न वद। यदि सोऽद्येदानीं फलं न खादति, तर्हि त्वमिदानीमेव खाद। त्वं श्वः कुत्र गमिष्यसि? यदि सोऽद्य नागमिष्यति, तर्ह्यहं तस्य गृहं श्वः सायं गमिष्यामि। कस्तत्रेदानी-मेवं वदति? तत्र रामभद्रोऽस्ति, स एवं वदति।

नहि, नहि तत्र रामचन्द्रो नास्ति। तर्हि कः सः? स हरिश्चन्द्रोऽस्ति। स को हरिश्चन्द्र? स नागपुर-देशीयो विष्णुमित्रस्य पुत्रो हरिश्चन्द्र इदानीमेव नागपुरादद्यागतः। स शोभनः पुरुषोऽस्ति। स नागपुरं कदा पुनर्गमिष्यति? स परश्वः सायं नागपुरं प्रति गमिष्यति। अथवा श्व एव गमिष्यति। स केन सह आगतः? स देवदत्तेन सहागतः। देवदत्तोऽपि तेन सह गमिष्यति किम्? नहि, देवदत्तोऽत्रैव स्थास्यति। स एव गमिष्यति। त्वमिदानीं किं करिष्यसि? अहमिदानीं न किमपि करोमि।

रामो गच्छति। रामं शरणं गच्छ। रामेण धनं दत्तं। रामाय छत्रं देहि। रामात् श्रेष्ठः कोऽपि नास्ति। रामस्य राज्यं। रामे चित्तं स्थिरं कर्तव्यं। हे राम! मां तारय।

---

## पाठ २६

अहं वदामि। विष्णुमित्रेण सहाहं वदामि। अहं विष्णुशर्मणा साकं वदामि। त्वं हरिश्चन्द्रेण साकं किं वदसि? स त्वया सह किं वदति? त्वं तं किं वदसि? रामेण सह गोविंदः कदा वदिष्यति? स किं वदति? स कुत्र वदति? देवदत्तो वदति। वदति विश्वामित्रः। रघुनाथः पठति। गदाधरः खादति। खादति रघुनाथः। हे देवदत्त! त्वं किं खादसि? हरिश्चन्द्र! त्वं फलं खादसि किम्? अहं फलं खादामि। अहं किमपि न खादामि। स किमपि खादति किम्? माधवो न खादति किमिदानीं फलम्? त्वमिदानीं न खादसि किम्? अत्राहं पठामि। यत्राहं पठामि, तत्र स पठति। यत्र स पठति, तत्राहं पठामि। यत्राहं पठामि, तत्र त्वं पठ। अधुना त्वं पठ। अहं सूर्यं पश्यामि। त्वामहं पश्यामि। रामचन्द्रः त्वां पश्यति। कः त्वां पश्यति? त्वं कं पश्यसि? त्वां कः पश्यति? पश्यति कः त्वाम्? त्वं गदाधरं पश्यसि किम्?

त्वं तत्र किं पश्यसि? अधुना, स त्वां पश्यति। इदानीं त्वं पश्यसि। त्वं कुत्र गच्छसि? त्वं काशीं

गच्छसि किम् ? कः काशीं गच्छति ? अहं वेणुग्रामं गच्छामि। अहं नगरं गच्छामि। रामचन्द्रो नगरं गच्छति। रघुनाथः पात्रं पश्यति। त्वं पात्रं पश्यसि। पश्यति रघुनाथो जलम्। जलं अहं पश्यामि। त्वं जलं पश्यसि किम् ? रघुनाथो जलं पश्यति किम् ? हरिश्चन्द्रो गच्छति। देवदत्त ! त्वं गच्छसि। मित्र ! अहं गच्छामि, त्वमपि गच्छ। मैत्रः तत्र पठति। मित्र ! त्वं तत्र पठसि किम् ? अहं तत्र पठामि। तत्राहं खादामि।

तत्र त्वं खादसि। रामचन्द्रः तत्र फलं खादति। हरिश्चन्द्रः तत्र पश्यति। त्वं तत्र पश्यसि। अहं तत्र पश्यामि। रघुनाथः तत्र गच्छति। त्वं तत्र गच्छसि। तत्र त्वं गच्छसि। गच्छसि त्वं तत्र। तत्र रघुनाथो गच्छति। गच्छति रघुनाथस्तत्र। अहं तत्र गच्छामि। तत्र गच्छाम्यहम्। तत्राहं गच्छामि। खादाम्यहं तत्र। तत्राहं खादामि। खादामि तत्राहम्। खादसि त्वं तत्र। तत्र त्वं खादसि। खादति रघुनाथस्तत्र। रघुनाथस्तत्र खादति। गदाधरः पठति। पठति गदाधरो ग्रन्थम्। पठति ग्रन्थं गदाधरः। हे कृष्ण ! तत्र त्वं पठसि। पठसि किं त्वं तत्र ? रघुनाथस्तत्र पठति। अहं तत्र पठामि। पठाम्यहं तत्र। तत्राहं पठामि।

रघुनाथः कुत्र पठति ? कुत्र पठति रघुनाथः ? पठति रघुनाथः कुत्र ? त्वं कुत्र पठसि ? कुत्र त्वं पठसि ? पठसि त्वं कुत्र ? अहं कुत्र पठामि ? कुत्राहं पठामि ? पठाम्यहं कुत्र ? अहं कुत्र खादामि ? कुत्राहं खादामि? खादाम्यहं कुत्र ? त्वं कुत्र खादसि ? कुत्र त्वं खादसि? खादसि त्वं कुत्र ? रघुनाथः कुत्र खादति ? खादति रघुनाथः कुत्र ? कुत्र रघुनाथः खादति ?

रामचन्द्रः कुत्र पश्यति ? पश्यति कुत्र रामचन्द्रः ? कुत्र रामचन्द्रः पश्यति ? त्वं कुत्र पश्यसि ? कुत्र त्वं पश्यसि ? पश्यसि त्वं कुत्र ? अहं कुत्र पश्यामि ? कुत्राहं पश्यामि ? पश्याम्यहं कुत्र ? हरिश्चन्द्रः कुत्र गच्छति ? कुत्र हरिश्चन्द्रो गच्छति ? गच्छति कुत्र हरिश्चन्द्रः ? त्वं कुत्र गच्छसि ? कुत्र गच्छसि त्वम् ? गच्छसि त्वं कुत्र ? गदाधरो गच्छति कुत्र ? अहं कुत्र गच्छामि ? गच्छाम्यहं कुत्र ? कुत्राहं गच्छामि ? अत्र रामचन्द्रः पठति । पठत्यत्र रामचन्द्रः । रामचन्द्रोऽत्र पठति। त्वमत्र पठसि । पठस्यत्र त्वम् । अत्र त्वं पठसि । अहमत्र पठामि । पठाम्यहमत्र । अत्राहं पठामि । यत्र हरिश्चन्द्रः पठति । पठति यत्र हरिश्चन्द्रः । हरिश्चन्द्रो यत्र पठति । यत्र त्वं पठसि ।

* ———

## पाठ २७

यदा स न पश्यति, तदा त्वं पश्यसि । यदा त्वं पश्यसि, तदाहं न पश्यामि । यदाहं पश्यामि, तदा स न पश्यति । तदा रामचन्द्रः गच्छति । रघुनाथस्तदा नैव गच्छति । तदा त्वं नैव गच्छसि। अहं यदा नैव गच्छामि, तदा त्वं गच्छसि। स यदा नैव गच्छति, तदा त्वं गच्छसि। त्वं यदा नैव गच्छसि, तदा स गच्छति । रघुनाथः कदा गच्छति? सः इदानीं न गच्छति । रामचन्द्रः कदा खादति ? इदानीं स नैव खादति। किं इदानीं स न खादति ? न स इदानीं खादति। किं स तत्र गच्छति ? नहि, स तत्र नैव गच्छति। त्वं तदा पठसि किम् ? नाहं तदा पठामि। तदा त्वं किं न पठसि ? रघुनाथः कदा पठति ? अहं कदा पठामि ? त्वं कदा पठसि ? यदा रामः पठति, तदा कृष्णो न पठति। कृष्णो यदा पठति, तदा रामो न पठति ।

यदा हरिश्चन्द्रः खादति, तदा रामो गच्छति । यः खादति, तं हरिश्चन्द्रः पश्यति । सूर्यं हरिश्चन्द्रः पश्यति । त्वं सूर्यं पश्यसि किम् ? रामः सूर्यं न पश्यति । अहं सूर्यं पश्यामि । त्वं सूर्यं न पश्यसि । अहं सूर्यं न पश्यामि । रामस्य जनकः सूर्यं पश्यति । वायुः गच्छति । सोमः गच्छति । वायुर्न गच्छति । सोमो न गच्छति । हरिश्चन्द्रस्य

जनकः कदा सोमं पश्यति ? कृष्णस्य जनकः सोमं न पश्यति किम् ? सर्वमित्रस्य जनकः सोमं न पश्यति किम् ? सर्वमित्र आगच्छति किम् ? किं त्वमागच्छसि ? अहमागच्छामि, सोमं पश्यामि च। हरिश्चन्द्रः किमपि न खादति। रामः किमपि न पश्यति। कृष्णः किमपि न पठति। खादति न किमपि रामः। कृष्णः किमपि खादति। न त्वं किमपि खादसि। न खादाम्यहं किमपि। अद्याहं गच्छामि। त्वमद्य गच्छसि किम् ? सोऽद्य गच्छति।

अद्य रामचंद्रो नगरं गच्छति। हरिश्चन्द्रोऽद्य नगरं गच्छति। रघुनाथः कृष्णस्य श्वेतं वस्त्रं पश्यति। गोपालो नगरमागच्छति। यज्ञमित्रो वनं गच्छति। विष्णुमित्रः पुस्तकं पठति। सूर्यो गच्छति। वायुरागच्छति। सोमो यदा आगच्छति, तदा त्वं मा खाद। स पुरुष इदानीं पश्यति। त्वं मा पश्य। तृणस्य वर्णो हरितः भवति। रामस्य हस्तः ह्रस्वोऽस्ति। कृष्णस्य हस्तो दीर्घः अस्ति। चन्द्रमित्रस्य गल्लः शोभनः अस्ति। तव ओष्ठो रक्तोऽस्ति। रामस्य ओष्ठो यथा रक्तोऽस्ति, न तथा कृष्णस्य। भूपो वदति।

भूपः नगरं अधुना गच्छति। भूपः सायं पात्रेण जलं पिबति। भूपः फलं खादति। भूपः पत्रं लिखति। भूपः तं पुरुषं पश्यति। भूपः पादाभ्यां गच्छति। भूपः

रामाय पुष्पं दास्यति। भूपः केशान्पश्यति। उद्याने भूपस्तिष्ठति। अधुना गृहे नैव तिष्ठति भूपः। ह्य एव नगरं गतो भूपः। भूपस्य वस्त्रं रक्तं अस्ति। कदा भूपो द्वारेण गच्छति? भूपस्य नयनं शोभनमस्ति। भूपो विज्ञोऽस्ति। वाचालो नास्ति भूपः। भूपोऽम्बरे सोमं पश्यति। भूपः सूर्यं अधुना पश्यति।

देवदत्तस्य जनकः कृपणः, इति जनो वदति। जन उद्याने गच्छति। गच्छति ग्रामं जनः। जनः अन्धः अस्ति। जनः किमपि न करोति। जनः किं न वदति, वदिष्यति च? जनः किं न द्रक्ष्यति, खादिष्यति वा? जनो ग्रामं गच्छति। जनो ग्रामादागच्छति। जनो वदति। जनः पठति ग्रन्थम्। जनः पश्यति देवम्। खादति फलं जनः। जनः अस्ति। जनो भवति। जनः पतति। जनो लिखति। जनः पचति। जनस्तिष्ठति। जनो धावति। जनो वदिष्यति। जनो द्रक्ष्यति त्वाम्। जनः खादिष्यति फलम्॥ गमिष्यति ग्रामं जनः। जनोऽन्नं भक्षयति। जनो धाविष्यति जनः उद्यानं प्रति तोयं प्रापयिष्यति।

—

## पाठ २८

जनो ग्रामाच्चलिष्यति । जनः शोभनो भविष्यति । तिमिरे जनः पतिष्यति । जनः किमपि करिष्यति । दास्यति जनः । जलं नेष्यति जनः । जनो द्रष्टुं धावति । कृष्णो वदिष्यति । कृष्णस्त्वां द्रक्ष्यति । कृष्णः फलं खादिष्यति । कृष्णो गमिष्यति नगरम् ? कृष्णो वनं गमिष्यति । कृष्णो नरं द्रक्ष्यति । कृष्णो द्रष्टुं धाविष्यति । कृष्णो मां प्रापयिष्यति । कृष्णश्चलिष्यत्युद्यानात् । कृष्णो मूढो भविष्यति । कृष्णः पतिष्यति । कृष्णः मालां करिष्यति । कृष्णो वस्त्रं दास्यति । कृष्णो वस्त्रं नेष्यति । कथं कृष्णो वस्त्रं नेष्यति । कृष्णो वाचालो भवति । कृष्णो बलिष्ठो भवति । विज्ञोऽस्ति कृष्णः । कृष्णो बधिरोऽस्ति । कृष्णो धनाढ्योऽस्ति । कृष्णो ग्रामं गतः । कृष्णो ग्रामादागतः । कृष्णेन त्वां प्रति किमुक्तम् ? मां प्रति किं दत्तम् ? किं पीतं कृष्णेन ? शोभनोऽस्ति कृष्णः । कृष्णो धीरोऽस्ति किम् ? अस्त्युदारः कृष्णः ।

रामस्य करः नीलः अस्ति । कृष्णस्य न तथा यथा रामस्यास्ति । परंतु कृष्णस्य श्वेतः अस्ति । तव करः दीर्घः अस्ति किम् ? रामस्य करः शोभनोऽस्ति । न तथा तव करः शोभनः । तस्य अश्वः चलति । रघुनाथः खादति

करेण । रामः करेण फलं खादति । चैत्रस्य करः कोमलः अस्ति । मैत्रः करेण वस्त्रं दास्यति । मम करः त्वां भूषणं दास्यति । रामभद्रस्य स्कन्धः शोभनः अस्ति । युवकस्य केशाः कृष्णाः सन्ति । जनाः फलानि खादन्ति । पुरुषौ फलानि खादतः । पुरुषौ लिखतः पत्रम् ।

शोभनस्य गृहस्य द्वारं विशालमस्ति । विशालस्य नगरस्य गृहाणि शोभनानि सन्ति । धनाढ्यस्य जनस्य केशाः कथं सन्ति । रामशर्मा अधुना स्कन्धं पश्यति । कृष्णस्तव-स्कन्धं पश्यति । रामो निरन्तरं वदिष्यति । त्वं सदा किं वदिष्यसि ? अधुना देवदत्तस्तत्र गच्छति । मनुष्यः पुस्तकं पठति । नरः नरेण साकं गच्छति । तव केशः शुभ्रः अस्ति । उदारस्य तस्य नरस्य ओष्ठो रक्तोऽस्ति । करे फलं पतति । करात् पतति फलम् । करात् भूषणं पतति । भूषणं करे पतति । तव हस्ते कदा फलमागच्छति ? सर्वमित्रस्य पादः शुभ्रः अस्ति । नगरात् शब्द आगच्छति । वनात् शब्द आगच्छति । मध्याह्ने शब्द आगमिष्यति । ग्रामादुदारो मनुष्यस्तोय दातुमागच्छति ।

## पाठ २९

देवदत्तः पादाभ्यां गच्छति। मैत्रःपादाभ्यां मध्याह्ने गच्छति। चैत्रः पादाभ्यां सत्वरं गच्छति ग्रामम्। भूमित्रो दन्तैः खादति फलम्। कृपणो मनुष्यो द्रव्यं नैव दास्यति। मनुष्यः पत्रं जले पश्यति। सः मनुष्यः पात्रे जलं पश्यति। त्वं पश्यसि किम्? अहं पश्यामि। सः वने जलं पश्यति। देवदत्तो वनं द्रष्टुं गतः। त्वमप्यागच्छ। वनं द्रष्टुं गच्छ। चैत्र! त्वं पत्रं लिख।

देवदत्तः ह्यः श्रीनगरादागतः। विष्णुमित्रः श्वो गमिष्यति राजपुरम्। हे नर! त्व गमिष्यसि किम्? हे देव! त्वं उपवेष्टुं इच्छासि किम्? किं देवो गमिष्यति? पुरुषः किं खादिष्यति? फलं खादिष्यति। दुग्धस्य वर्णः श्वेतोऽस्ति। उद्यानस्य वर्णः हरितः अस्ति। तोयस्य वर्णः शुभ्रः अस्ति। तस्य पुष्पस्य वर्णः कृष्णः अस्ति। नीरं शुभ्रं अस्ति। किं त्वमिदानीं न पठासि? अहं सदा तत्र पश्यामि। भूमित्रो यत्र पश्यति, तत्र चैत्रो गच्छति। भूपः कं पुरुषं पश्यति? अधुनाऽहं भूपं पश्यामि। त्वं कदा तत्र वदासि? यदा रघुनाथस्तत्र गच्छति,तदा त्वमप्यागच्छ। कृष्णो भूपोऽस्ति। तदानीं रघुनाथो रामचन्द्रं वदति। तदानीं रघुनाथो रामचन्द्रं

पश्यति। कृष्णोऽधुना कुत्राऽस्ति? रामोऽद्य कुत्राऽस्ति? यत्र पादः पतति, तत्र कोऽपि नास्ति। यत्र गोविंदः पश्यति, तत्र त्वं न भवसि। यत्र त्वं पश्यसि, तत्र मुकुंदो नास्ति।

यत्राहं पश्यामि, तत्र त्वं न भवसि। यदा रामो आगच्छति, तदा विष्णुर्गृहं गच्छति। स किं किमपि न वदति? विष्णुरिदानीं किमपि न पठति। यथा गोविंदः पठति, तथा मुकुंदो गच्छति, तथा हरिः किं न गच्छति? अहं पठामि। अहमद्य पठामि। अहमद्य न पठामि। अहमद्यात्र वदामि। त्वमद्यात्र किं न वदसि? सोऽद्यात्र किं न वदति? सोऽद्य तत्र खादति। किं त्वमिदानीं तत्र पश्यसि? नहि, अहं अद्य अत्र पश्यामि। अधुना त्वं खादसि किम्? मुकुंदः कुत्रास्ति। रामस्तत्र नास्ति। त्वमद्य तत्र किं न पठसि? कमलस्य कः वर्णः? कमलस्य शुभ्रो वर्णः। दुग्धस्य कः वर्णः? श्वेतो वर्णः दुग्धस्य। तिमिरस्य कः वर्णः। तिमिरस्य कृष्णो वर्णः। अहं नैव वदामि। सोऽद्य कुत्र गच्छति? त्वं मम गृहे अद्य आगच्छसि किम्?

---

## पाठ ३०

मैत्रस्य भूषणं कुत्रास्ति ? त्वं पत्रं किं न लिखसि ? यत्र बुद्धो गच्छति, तत्र त्वं किं न गच्छसि ? गृहस्य द्वारं अत्रास्ति । रामचंद्रस्य वस्त्रं कुत्रास्ति ? सलिले कमलं किं नास्ति ? कृष्णस्य भूषणं कुत्रास्ति ? देवदत्तस्य पुस्तकं तत्र नास्ति । भूपस्य नगरं अत्रास्ति । स नगरादागतः । खादति फलं सः । त्वं फलं किं न खादसि ?

अहं इदानीं वनं न गच्छामि । सदा तत्र गच्छति विश्वनाथः । स इदानीं जलस्य समीपे गच्छति । तस्य पुस्तकं पुराणं अस्ति । तस्य नगरं विशालं अस्ति । कृष्णस्य हस्तो बलिष्ठोऽस्ति । मुकुंदस्य वस्त्रं नवीनं अस्ति । रामो विज्ञो भवति । वाचालो हरिरिदानीं वदति । श्वेतं दुग्धं अर्जुनेन पीतम् । रघुनाथः कृष्णोऽस्ति । वनं हरितं अस्ति । सः मनुष्यः अन्धोऽस्ति । त्वं धीरोऽसि । तस्य गृहस्य द्वारं ह्रस्वं अस्ति । त्वं सः जलं प्राशयितुमिच्छति । किं त्वं वनं गन्तुं इच्छसि ? किं मुकुंदो भूषणं द्रष्टुं इच्छति ? रघुनाथो वीरोऽस्ति । किं कर्तुं इच्छसि त्वम् ? सोऽत्रागन्तुं नेच्छति । स तत्र खादितुं इच्छति । किं त्वं अत्र खादितुं नेच्छसि ? स पुस्तकं नेतुं इच्छति । गोविंदः पुस्तकं पठितुं नेच्छति । त्वं किं इच्छसि ? तव वस्त्रं रक्तं अस्ति किम् ? तव वर्णः कृष्णोऽस्ति किम् ?

ष्यामि। त्वमत्रैवोपविश नोचेदहं गमिष्यामि। त्वं आगच्छसि चेत् तर्हि अहं अत्र तिष्ठामि। त्वं तत्र तिष्ठसि चेत् अहं आगमिष्यामि।

त्वमागच्छ नोचेदहं गमिष्यामि। त्वं अन्नं कुरु, अहं खादितुं इच्छामि। खादितुं आगच्छामि। त्वं करं भ्रामय। रघुनाथः कृष्णाय पात्रं दास्यति। शोभनं पात्रं दुग्धाय दास्यति। स दुग्धाय शोभनं पात्रं नेष्यति। त्वं अत्रैवो-पविश, तुभ्यमहं वस्त्रं दास्यामि। त्वमत्रैव वतिष्ठ, तुभ्यमहं दुग्धं दास्यामि। त्वमत्र स्थातुं किं नेच्छसि? अहं त्वया साकं वदितुमिच्छामि। त्वं मया सह वदितुं नेच्छसि किम्? स त्वया सह वक्तुमिच्छति। त्वं तेन साकं वक्तुं किं न इच्छसि?

अहं तुभ्यं चंदनं दास्यामि। त्वं मह्यं वस्त्रं दास्यसि किम्? रघुनाथो मुकुन्दस्य गृहे उपवेष्टुं किं नेच्छति? त्वमेव तस्य गेहे उपविश। त्वं पुष्पं द्रष्टुं इच्छसि किम्? यत्र त्वं गन्तुं इच्छसि, तत्र गच्छ। त्वं कुत्र गन्तुं इच्छसि? अहं तत्राग-च्छामि, यत्र त्वं गन्तुं इच्छसि। यत्र त्वं खादितुं गच्छसि, तत्राहं नागच्छामि। यत्र त्वं पठसि, तत्राहमागच्छामि। अहं यत्र पठामि, तत्र किं न पठसि? अहं यदा खादामि, तदा त्वं किं नागच्छसि? सायमहमत्र खादामि। प्रातरहं फलं खादामि। यदाहं पश्यामि, तदा त्वं किं न पश्यसि?

## पाठ ३२

अहं लिखामि तदा त्वं किं वदसि ? यदाहं वदामि तदा त्वं किं लिखसि ? यत्र रघुनाथः पत्रं लिखति, तत्र कृष्णो गच्छति। यदाहं खादामि, तदा त्वं पठ। यत्र त्वं गच्छसि, तत्र गच्छाम्यहम्। रघुनाथः पुराणं वस्त्रं दास्यति। विश्वामित्रो भूषणामिच्छति। तत्र त्वं पुष्पं किं न पश्यसि ? सायं त्वं पुष्पं पश्यसि। त्वं सदा पुष्पमेव पश्यसि किम् ? स यदा गच्छति, अहं तदा गच्छामि। अहं यत्र पश्यामि, तत्र स न गच्छति किम् ? तदाहं किं न खादामि ? यदा त्वं खादसि, तदा विश्वामित्रः पठति किम् ?

विश्वामित्रो गच्छति अथवा न गच्छति। अहं पठामि अथवा न पठामि। त्वं खादसि अथवा न खादसि। अहं प्रातरत्र आगच्छामि। यदि स खादिष्यति, तर्हि अहं वदामि। अहं मम गृहे यदा पठामि, तदा न स आगच्छति। यदा विश्वामित्रस्तत्र पश्यति, तदाहं तत्र न गच्छामि। अहं सलिलं द्रक्ष्यामि। अहं कमलं न पश्यामि। अहं कमलं नेतुं आगतः। विश्वामित्रो गच्छति। भूमित्रो न वदति। कृष्णो न गच्छति। तदा कृष्णो न पश्यति। अथ तत्र रामो न गमिष्यति। रामो निरन्तरं तत्र गच्छति। रामो मुकुंदेन सह यदा

रामचन्द्रस्य नवीनं पुस्तकं शोभनं अस्ति। मुकुंदस्य पुराणं पुस्तकं शोभनं नास्ति। रामस्य नवीनं गृहं कुत्रास्ति? विज्ञस्य नरस्य शोभनं पुस्तकं अत्रास्ति। त्वं शोभनं वनमिदानीं गच्छसि किम्? नहि, इदानीं अहं तव विशालं गृहं आगच्छामि। स नरः भूपस्य शोभनात् गृहात् इदानीं आगच्छति। स कृपणः पुरुषः इदानीं कुत्रास्ति? कृष्णः रामं प्रति वदति। रामेण सह विष्णुमित्रः वदति। रघुनाथेन साकं हरिः नगरं गच्छति। मासेन पुस्तकं कृतम्। तेन तत् शोभनं कृतम्। भूमित्रो तस्य भूपस्य नगरं गतः।

मम सकाशात् स यदि पुस्तकं नेष्यति, तर्ह्यहं दास्यामि। तव सकाशात् यद्यहं वस्त्रं नेष्यामि, तर्हि त्वं दास्यसि किम्? मुकुंदो गमिष्यति किं सत्वरं? त्वं सत्वरं मह्यं पुस्तकं देहि। सत्वरं स पत्रं लेखिष्यति किम्? स तुभ्यं पुस्तकं दास्यति किम्? रामं पात्रं पश्यति किम्? मया तस्मै सलिलं दत्तम्। त्वया तस्मै पात्रं दत्तं किम्? तेन मह्यं फलं दत्तम्।

भूपस्य नगरं को गतः? मुकुंदः अथवा रामः? त्वया तस्मै किमपि उक्तं किम्? देवदत्तो गृहादागतः। अहं नगरं गतः। स उद्यानादागतः। वाचालो मुकुंदो वनादागतः। अद्याहं दुग्धायागतः। अद्य त्वं चन्दनाय गतः किम्? त्वं इदानीं अत्रोपविश। त्वं अद्य अत्रैव तिष्ठ। त्वं अद्य पत्रं लिख। त्वं श्वः प्रातः फलं खादिष्यसि किम्?

## पाठ ३१

रामो रक्ताय वस्त्रायागतः। विश्वनाथो नीरायोद्यानं गतः। रघुनाथः पुष्पायोद्यानं गतः। स नगरादागन्तुं इच्छति। अहं त्वया सहागन्तुं इच्छामि। स मया साकं पठितुं इच्छति। अहं तेन सह धावितुं इच्छामि। रामः कृष्णेन साकं वक्तुं इच्छति। कृष्णः पात्रं कर्तुं इच्छति। अहं भूषणं दातुं इच्छामि। मया सह पुरुषो वदति। त्वया सह स नरः वनं पश्यति।

यत्र स खादति, तत्राहं न गच्छामि। अहं अत्र खादामि? त्वं कुत्र खादसि? यत्र स पठति तत्राहं पठामि। कः पठति? किं पठति? स किं पश्यति? रघुनाथ इदानीं न पठति। त्वं अधुना किं खादसि? अधुना किं न खादसि? अहं दिवा खादामि। स रात्रौ खादति। त्वं द्रुतं खादसि। त्वं फलं खाद अथवा मा खाद। जलात् कमलं नय। तोयात् फलं तत्र नय। सलिलात्कमलं तत्राहं नेष्यामि। त्वं तत्र सलिलात्कमलं नेष्यसि किम्? स तस्मात्तोयादागच्छति। स तस्मिन् सलिले कमलं पश्यति। स तस्मिन्पात्रे पुष्पं पश्यति। स वने पुष्पं द्रक्ष्यति। त्वं गृहे पुष्पं द्रक्ष्यसि किम्।

त्वं पुस्तकं द्रुतं पठ। यदि त्वं पुस्तकं पठसि, तर्ह्यहमागच्छामि। स सत्यं वदति। भूपो ह्य आगतः। त्वं मया सह वद, नोचेदहं गमिष्यामि। त्वं लिख, नोचेदहं लेखि-

आगमिष्यति, तदाहमप्यागमिष्यामि । त्वमपि तदा तत्र गच्छ । स सर्वभूतानां ईश्वरोऽस्ति । स भूतानां हृद्देशे तिष्ठति । सर्वभूतानि भ्रामयन् तिष्ठति । यन्त्रारूढानि भ्रामयन् तिष्ठति । मायया यन्त्रारूढानि भूतानि भ्रामयन् तिष्ठति ।

हे भारत ! त्वं शरणं गच्छ । त्वं तं शरणं गच्छ । त्वं तं एव शरणं गच्छ । त्वं तं सर्वभावेन शरणं गच्छ । त्वं शान्ति प्राप्स्यसि । त्वं स्थानं प्राप्स्यसि । त्वं शाश्वतं स्थानं प्राप्स्यसि । सत्यस्य वचनं श्रेयः अस्ति । श्रेयः सत्यस्य वचनं अस्ति । सत्यादपि हितं वदेत् ।

हितं वदेत् । तत् भूतहितं अस्ति । यत् अत्यन्तं भूतहितं अस्ति, तत् मम सत्यं मतम् । सः मरणात् भीतः अस्ति । त्वं मरणात् भीतः न असि । अहं मरणात् भीतः न अस्मि । तस्य यशः दूषितं अस्ति । तव यशः दूषितं नास्ति ।

देवदत्तो वृद्धो भवति । तस्य शिरः पलितं अस्ति । तथापि स न वृद्धः । यस्मात् शिरः पलितं अस्ति, तस्मात् वृद्धो न भवति, तस्मात्सः न वृद्धः । विष्णुमित्रः अधीयानोऽस्ति । अतः स स्थविरः । स युवा अपि स्थविरः । यः अधीयानः तं तरुणं अपि स्थविरं विदुर्देवाः ।

—

अंक २

ॐ

# संस्कृत-पाठ-माला

[संस्कृत-भाषाका अध्ययन करनेका सुगम उपाय]

## द्वितीय भाग ।

लेखक

प. श्रीपाद दामोदर सातवळेकर

अध्यक्ष - स्वाध्याय-मंडळ, साहित्य वाचस्पति, गीतालंकार

दशम बार

संवत् २०१०, शक १८७५, सन १९५४

# आपकी उन्नति

आपकी उन्नति संस्कृत भाषामें कितनी हो रही है और अति अल्प कालमें आपको संस्कृत वाक्य बनाना भी कितनी सुगमतासे आ गया है, यह आपने प्रथम भागमें देख ही लिया है।

अब यह द्वितीय भाग आपके सम्मुख प्रस्तुत किया जाता है और पूर्ण आशा है कि इससे भी आपको अत्यंत लाभ होगा और आपकी प्रगति संस्कृतमें अति अल्प प्रयत्नसे ही हो जायेगी।

लेखक
श्री. दा. सातवळेकर

प्रकाशक और मुद्रक : व. श्री. सातवळेकर, बी. ए.
स्वाध्याय मंडल, भारत मुद्रणालय, आनंदाश्रम, किल्ला-पारडी, ( जि. सूरत )

ॐ

# संस्कृत–पाठ–माला

## द्वितीय भाग ।

### पाठ १

निम्नलिखित शब्द ध्यानमें रखिये—

| | |
|---|---|
| पिबति –(वह) पीता है। | पास्यति –(वह) पीवेगा। |
| पिबसि –(तू) पीता है। | पास्यसि –(तू) पीवेगा। |
| पिबामि –(मैं) पीता हूं। | पास्यामि –(मैं) पीऊंगा। |
| भक्षयति –(वह) भक्षण करता है। | भक्षयिष्यति –(वह) भक्षण करेगा। |
| भक्षयसि –(तू) भक्षण करता है। | भक्षयिष्यसि –(तू) भक्षण करेगा। |
| भक्षयामि –(मैं) भक्षण करता हूं। | भक्षयिष्यामि –(मैं) भक्षण करूंगा। |

अब इनसे बननेवाले वाक्य देखिये—

#### संस्कृत वाक्य ।

१ अहं जलं पिबामि। २ त्वं जलं किं न पिबसि? ३ सा इदानीं दुग्धं नैव पिबति। ४ यः दुग्धं न पिबति। ५ सः फलं न भक्षयिष्यति। ६ सः तत्र अन्नं भक्षयति। ७ यदि त्वं दु[illegible] पास्यसि ८ तर्हि अहं जलं पास्यामि।

१ मैं जल पीता हूं। २ तू जल क्यों नहीं पीता? ३ वह अब दूध नहीं पीता। ४ जो दूध नहीं पीता। ५ वह फल नहीं खायेगा। ६ वह वहां

अन्न खाता है। ७ यदि तू दूध नहीं पीयेगा। ८ तो मैं जल पीऊंगा।

अब आप निम्नलिखित वाक्योंके भाषावाक्य बनाइये—

## संस्कृत वाक्य।

सः श्वः अन्नं कुत्र भक्षयिष्यति? तव गृहे सः उदकं पास्यति वा न वा? कथं सः तस्य पात्रे दुग्धं पास्यति? मम पात्रं तस्य पात्रात् अधिकं शोभनं अस्ति। तव वस्त्रं मम वस्त्रात् अधिकं शोभनं नास्ति। अहं तव नगरं नैव गमिष्यामि। सः इदानीं गृहे एव तिष्ठति, तं तत्र नय। त्वं गोदुग्धं किं न पिबसि? अहं गोदुग्धं एव पिबामि। सदा एव अहं गोदुग्धं पिबामि, पास्यामि च। त्वं अपि तथा कुरु। तस्य वृक्षस्य फलं स तत्र नयति। त्वं अत्र पत्रं लिख। अहं इदानीं एव गृहं गमिष्यामि। विश्वामित्रः कुत्र गतः? स इदानीं कुत्र अस्ति? कस्मिन् गृहे स इदानीं अस्ति? स इदानीं उद्याने अस्ति, पुष्पं फलं च आनयति। त्वं अत्र आगच्छ, उपविश, पुस्तकं च पठ।

निम्नलिखित शब्द अब स्मरण कीजिये—

## शब्द।

| | |
|---|---|
| वानरः — बंदर | लेखः — लेख |
| बिडालः— बिल्ली | दण्डः — सोटी |
| मार्जारः— बिल्ली | ब्राह्मणः — ब्राह्मण |
| आतपः — सूर्यकिरण, धूप | कुमारः — लडका |
| मंत्रः — मंत्र | अपराधः— गुनाह |
| वेदः — वेद | बालः — लडका |

अब इनका वाक्योंमें उपयोग कीजिये—

## संस्कृत वाक्य।

१ तत्र पश्य, वानरः दुग्धं पिबति। २ तत्र वानरः नास्ति, स बिडालः अस्ति, यः दुग्धं पिबति। ३ तस्मिन् आतपे त्वं किं न गच्छसि ? ४ तस्मिन् पात्रे त्वं किं करोषि ? ५ सः कस्य शोभनः कुमारः ? ६ सः हरिश्चन्द्रस्य शोभनः बालः।

## भाषावाक्य।

१ वहां देख, बंदर दूध पीता है। २ वहां बंदर नहीं है, वह बिल्ली है, जो दूध पीती है। ३ उस धूपमें तू क्यों नहीं जाता ? ४ उस पात्रमें तू क्या करता है ? ५ वह किसका सुंदर लडका है ? ६ वह हरिश्चन्द्रका सुन्दर लडका है।

अब निम्नलिखित वाक्य आप पढते ही समझ सकते हैं—

## संस्कृत–वाचन–पाठः।

तव पुस्तकं अहं तत्र नयामि। स मम फलं अत्र आनयति। गोपालः गोदुग्धं कुत्र नयति ? भीमसेनः इदानीं यत्र अस्ति, तत्र त्वं अधुना मा गच्छ। यत्र मम बिडालः अस्ति, तत्र त्वं इदानीं एव गोदुग्धं नय। सुवर्णस्य आभूषणं कः करोति ? मया सुवर्णस्य आभूषणं कदापि न कृतम्। मम गृहे एकः पुत्रः अस्ति।

## संधि किये हुए वाक्य।

तव पुस्तकमहं तत्र नयामि। सः मम फलमत्रानयति। गोपालो गोदुग्धं कुत्र नयति ? भीमसेन इदानीं यत्रास्ति, तत्र त्वमधुना न गच्छ। यत्र मम बिडालोऽस्ति तत्र त्वमिदानीमेव गोदुग्धं नय। सुवर्णस्याभूषणं कः करोति ? तव पात्रमत्राऽऽनय।

## पाठ २

न भीतो मरणादस्मि केवलं दूषितं यशः
विशुद्धस्य हि मे मृत्युः पुत्रजन्मसमः किल ॥

( मृच्छकटिक नाटक १०।२७ )

पद- न । भीतः । मरणात् । अस्मि । केवलं । दूषितं । यशः । विशुद्धस्य । हि । मे । मृत्युः । पुत्र+जन्म+समः । किल ।

अन्वयः— ( अहं ) मरणात् भीतः न अस्मि । केवलं यशः दूषितं । हि विशुद्धस्य मे मृत्युः पुत्रजन्मसमः किल ।

अर्थ— ( मैं ) मृत्युसे नहीं डरता हूं, केवल यश कलंकित होनेसे डरता हूं । क्योंकि विशुद्ध मृत्यु मुझे पुत्रजन्मके समान है ।

पिताचार्यः सुहृन्माता भार्या पुत्रः पुरोहितः ।
नादण्ड्यो नाम राज्ञोऽस्ति यः स्वधर्मे न तिष्ठति ॥

मनुस्मृति ८।३३५

पद- पिता । आचार्यः । सुहृत् । माता । भार्या । पुत्रः । पुरोहितः । न । अ+दण्ड्यः । नाम । राज्ञः । अस्ति । यः । स्व+धर्मे । न । तिष्ठति ।

अन्वयः— पिता, आचार्यः, सुहृत्, माता, भार्या, पुत्रः, पुरोहितः यः स्वधर्मे न तिष्ठति, ( सः ) राज्ञः अदण्ड्यः नाम न अस्ति ।

अर्थ— पिता, गुरु, मित्र, आचार्य, सुहृत्, माता, भार्या, पुत्र, पुरोहित ( इनमेंसे कोई भी ) जो स्वधर्मका पालन नहीं करते वे राजासे अदण्डनीय नहीं है । ( अर्थात् अधर्माचरण करनेवालोंको राजा अवश्य दण्ड दे ) ।

✓ न तेन वृद्धो भवति येनास्य पलितं शिरः ।
यो वै युवाऽप्यधीयानस्तं देवाः स्थविरं विदुः ॥

मनुस्मृति २।१५६

पद- न । तेन । वृद्धः । भवति । येन । अस्य । पलितं । शिरः । यः । वै । युवा । अपि । अधीयानः । तं । देवाः । स्थविरं । विदुः ।

अन्वयः— येन अस्य पलितं शिरः, तेन वृद्धः न भवति । यः वै युवा अपि अधीयानः, तं देवाः स्थविरं विदुः ।

अर्थ— जिसका शिर ( बाल ) श्वेत हो गया है उसको वृद्ध नहीं कहते, जो युवा होनेपर भी अध्ययनशील ( बुद्धिमान ) है उसे देव वृद्ध कहते हैं ।

त्रिविधं नरकस्येदं द्वारं नाशनमात्मनः ।
कामः क्रोधस्तथा लोभस्तस्मादेतत्त्रयं त्यजेत् ॥

भगवद्गीता १६।२१

पद—त्रि+विधं । नरकस्य । इदं । द्वारं । नाशनं । आत्मनः । कामः । क्रोधः । तथा । लोभः । तस्मात् । एतत् । त्रयं । त्यजेत् ।

अन्वयः— आत्मनः नाशनं नरकस्य एतत् त्रिविधं द्वारं । कामः, क्रोधः, लोभः । तस्मात् एतत् त्रयं त्यजेत् ।

अर्थ— स्वयको नाश करनेवाले नरकके ये तीन द्वार हैं । इसलिये इन तीन ( काम, क्रोध, लोभ ) को त्याग देना चाहिये ।

पाठक इन श्लोकोंको बारबार पढ़ और हो सके तो मुखस्थ कर लें । अब निम्नलिखित वाक्य पढ़िये—

कः तत्र इदानीं गच्छति ? सः मनुष्यः इदानीं किं पठति ? यदा स अत्र खादति तदा त्वं किं करोषि ? यथा बालकः धावति तथा त्वं अपि धावसि किम् ? कदा त्वं अद्य मम गृहं आगमिष्यसि ? तत्र एव त्वं गच्छ यत्र स पुरुषः अस्ति । तस्य कूपस्य त्वं जलं अत्र आनय । यदा त्वं गच्छसि तदा स आगच्छति । स सुवर्णस्य आभूषणं शोभनं एव करोति । तत् पात्रं अत्र आनय । कुत्र अस्ति तस्य पात्रम् ? कः तत्र अस्ति यः एवं करोति ? हे पुरुष ! त्वं किं इदानीं करोषि ? स इदानीं जलं पिबति । यदि त्वं अन्नं न खादसि तर्हि दुग्धं पिब । न युक्तं इदानीं दुग्धं पातुं, केवलं उष्णं जलं एव पिबामि ।

—•—

# पाठ ३

निम्नलिखित शब्द ध्यानमें रखिये—

| | |
|---|---|
| वा - अथवा | अपि - भी |
| अथवा - अथवा | नोचेत् - नहीं तो |
| किंवा - अथवा | हि - क्योंकि |
| प्रभूतं - बहुत | चेत् - यदि |
| व्यर्थं - व्यर्थ | न्यूनं - थोडा |

इन शब्दोंका उपयोग करके वाक्य बनाइये—

१ किं त्वं पुस्तकं पठिष्यसि अथवा स पठिष्यति ? २ यदि सः अद्य अत्र आगमिष्यति तर्हि त्वं तत्र न गच्छ, नोचेत् श्वः प्रातः एव गच्छ। ३ सः सदा प्रभूतं वदति। ४ त्वं वद, नोचेत् अहं वदिष्यामि। ५ सत्यं अपि अयुक्तं न वद।

इन वाक्योंका हिन्दी वाक्य देखिये—

१ क्या तुम पुस्तक पढोगे अथवा वह पढेगा ? २ यदि वह आज यहां आयगा तो तुम वहां मत जा, नहीं तो कल सवेरे जा। ३ वह हमेशा अधिक बोलता है। ४ तुम बोलो नहीं तो मैं बोलूंगा। ५ सत्य किन्तु अयुक्त मत बोल।

अब आपको निम्नलिखित वाक्य जल्दी समझमें आजायेंगे—

यदि स अद्य इदानीं फलं न खादति तर्हि त्वं इदानीं एव खाद। त्वं श्वः कुत्र गमिष्यसि ? यदि सः अद्य न आगमिष्यति, तर्हि अहं तस्य गृहं श्वः सायं गमिष्यामि। कः तत्र इदानीं एवं वदति ? तत्र रामचंद्रः अस्ति सः एवं वदति। नहि नहि, तत्र रामचन्द्रः नास्ति। तर्हि कः सः ? सः हरिश्चन्द्रः अस्ति। सः कः हरिश्चंद्रः ? स नागपुरदेशीयः विष्णुमित्रस्य पुत्रः हरिश्चंद्रः

इदानीमेव नागपुरात् अत्र आगतः। स शोभनः पुरुष अस्ति। स नागपुरं कदा पुनः गमिष्यति ? स परश्वः सायं नागपुरं प्रति गमिष्यति अथवा श्वः एव गमिष्यति। स केन सह आगतः ? स देवदत्तेन सह आगतः। देवदत्तः अपि तेन सह गमिष्यति किं ? नहि, देवदत्तः अत्र एव स्थास्यति। स एव गमिष्यति। त्वं इदानीं किं करिष्यसि ? अहं इदानीं न किमपि करोमि।

निम्नलिखित शब्द ध्यानमें रखिये—

| | | | |
|---|---|---|---|
| नगरं | – शहर | चंदनं | – चंदन |
| उद्यानं | – बगीचा | वस्त्रं | – वस्त्र |
| तोयं | – पानी | काष्ठं | – लकडी |
| नीरं | – पानी | पात्रं | – पात्र, बर्तन |
| उदकं | – पानी | अन्नं | – अन्न |
| नखं | – नख | दुग्धं | – दूध |
| पुष्पं | – फूल | पीतं | – पीया हुआ |

इन शब्दोंका उपयोग करके वाक्य बनाइये—

श्रीरामचंद्रस्य नगरं अयोध्यानामकं अस्ति। श्रीकृष्णस्य नगरं द्वारकानामकं अस्ति। त्वया दुग्धं किं न पीतम् ? मया दुग्धं न पीतम्। तत्र दुग्धं नास्ति। तत्र नीरं अस्ति। मम वस्त्रं तेन इदानीं नीतम्। तत्र त्वं उपविश। अहं इदानीं मध्याह्नसमये सूर्यस्य किरणे सूर्यस्य प्रकाशे वा उपविशामि। तव नखं कथं न रक्तं अस्ति ? कथं पीतं एव दृश्यते ? तस्मिन् कूपे उदकं नास्ति। तस्मिन् जले कमलस्य पुष्पं न भवति।

निम्नलिखित हिन्दी वाक्योंका संस्कृत वाक्य बनाइये—

मैं अब घर जाता हूं। दूध कहां है ? वह कहां गया है ? मैं अभी घरसे आया। वह धूपमें क्यों नहीं बैठता ? उसका घर कहां है ? उसका बगीचा कहां

है ? बलराम कहां गया ? तुम वहां क्यों नहीं जाते ?

निम्नलिखित संस्कृत वाक्योंका हिन्दी वाक्य बनाइये—

अहं इदानीं गृहात् अत्र आगतः ? फलं कुत्र अस्ति ? त्वया जलं किं न आनीतं ? स इदानीं जलं न आनेष्यति किम् ? स किं पश्यति ? स तत्र तव पत्रं नेष्यति । अहं एव मम पुस्तकं तव गृहं प्रति प्रापयिष्यामि।

---

## पाठ ४

निम्नलिखित वाक्य पढ़िये—

तव गृह कुत्र अस्ति ? स कथं न आगच्छति। यदि स इदानीं न आगतः तर्हि श्वः प्रातःकाले आगमिष्यति । तस्मिन् कूपे प्रभूतं जलं अस्ति। तत् त्वं पश्यसि किम् ? तत्र इदानीं स न भवति।

### शब्द ।

| | |
|---|---|
| जानामि – ( मैं ) जानता हूं । | ज्ञातं – जान लिया । |
| जानासि – ( तू ) जानता है । | ज्ञातुं – जाननेके लिये । |
| जानाति – ( वह ) जानता है । | आज्ञातुं– आज्ञा करनेके लिये। |
| पातुं – पीनेके लिये । | पानं – पीना । |
| इति – ऐसा । | कति – कितने । |

### संस्कृत-वाक्य ।

१ त्वं जानासि किं कः अहं अस्मि ? २ अहं न जानामि त्वं कः असि । ३ अहं विष्णुमित्रस्य पुत्रः कृष्णशर्मा अस्मि । ४ त्वं पुस्तकं

इदानीं कुत्र नयसि ? ५ स पुरुषः पठितुं इच्छति । ६ मया ज्ञातं तव हस्ते किं अस्ति इति । ७ हे मनुष्य ! तव नाम किं अस्ति ? ८ मम नाम यज्ञसेनः इति ।

## भाषा-वाक्य ।

१ क्या तू जानता है कि मैं कौन हूं ? २ मैं नहीं जानता तू कौन है । ३ मैं विष्णुमित्रका पुत्र कृष्णशर्मा हूं । ४ तू पुस्तक अब कहां ले जाता है ? ५ वह पुरुष पढ़ना चाहता है । ६ मैंने जान लिया कि तेरे हाथमें क्या है । ७ हे मनुष्य ! तेरा नाम क्या है ? ८ मेरा नाम यज्ञसेन है ।

अब निम्नलिखित शब्द कण्ठस्थ कीजिये —

| | |
|---|---|
| मोदकः = लड्डू | ओदनः = चावल |
| कन्दुकः = गेंद | भक्तः = भात |
| आनन्दः = आनंद | आमोदः = सुगंध |
| मणिकारः = जौहरी | धृतः = धारण किया हुआ |
| सुवर्णकारः = सुनार | आघ्रातः = सूंघा हुआ |
| लोहकारः = लुहार | भुक्तः = भोजन किया हुआ |
| वस्त्रकारः = जुलाहा | अर्थः = पैसा, धन |

## संस्कृत वाक्य ।

१ सः बालः आनंदेन मोदकं खादति । २ पश्य कथं सः खादति । ३ हे सुवर्णकार ! मम बालकाय एकं भूषणं देहि । ४ वस्त्रकारः तस्मै पुरुषाय वस्त्रं करोति । ५ कः पुरुषः अर्थस्य दासः ? ६ कः नरः ईशस्य भक्तः ? ७ अहं अर्थस्य दासः न अस्मि, परंतु ईश्वरस्य भक्तः अस्मि ।

## भाषा-वाक्य ।

१ वह बालक आनंदसे लड्डू खाता है । २ देख, वह कैसे खाता है ? ३ हे सुनार ! मेरे बालकके लिये एक भूषण दे । ४ जुलाहा उस मनुष्यके

लिये वध बनाता है। ५ कौन मनुष्य धनका दास है ? ६ कौन मनुष्य ईश्वरका भक्त है ? ७ मैं धनका दास नहीं हूं, परंतु ईश्वरका भक्त हूं।

अब निम्नलिखित वाक्य पढिये—

## संस्कृत--वाचन--पाठः ।

तस्मै पुरुषाय मोदकं देहि। यदि सः मनुष्यः इदानीं एव खादितुं न इच्छति, तर्हि तस्मै न देहि। कः इदानीं मोदकं खादितुं इच्छति ? अहं मोदकं न खादितुं इच्छामि, परंतु फलं भक्षयितुं इच्छामि। यथा त्वं इच्छसि तथा कुरु। यदि दुग्धं पातुं इच्छसि, तर्हि गोदुग्धं एव पिब। यदि जलं पातुं इच्छसि तर्हि, मम कूपस्य एव जलं पिब।

यदा सः मनुष्यः कूपस्य समीपं गच्छति, तदा त्वमपि तेन सह तत्र गच्छ। स तत्र कूपस्य समीपं गच्छति, परंतु जलं न आनयति।

हे नर ! त्वं इदानीं वेदस्य पुस्तकं अत्र आनय। कं अपि मंत्रं पठ। त्वं वेदस्य मंत्रं जानासि किम् ? वेदस्य मंत्रः त्वया कदा पठितः ? केन सह पठितः ? कस्य पुत्रः त्वं असि ? कुत्र इदानीं पठसि ? किं पठसि ? सः उत्तमः मनुष्यः अस्ति। सः इदानीं उद्यानं प्रति गतः। मम गृहस्य समीपे एव उद्यानं अस्ति। तत्र एव सः गतः। पुष्पं आनयितुं सः इच्छति। तत्र वृक्षे शोभनं पुष्पं भवति। कथं सः पुष्पं आनयति ? तत्र एकं अपि पुष्पं नास्ति।

सत्यस्य वचनं श्रेयः। धर्मस्य वचनं श्रेयः अस्ति न वा ? धर्मस्य वचनात् धर्मस्य आचरणं एव श्रेयः। सदा हितं वचनं एव वदेत्। एतत् मम सत्यं युक्तं च मतं अस्ति। यत् अत्यन्तं भूतहितं तत् एव सत्यं इति सः वदति। सत्य एव धर्मः। धर्मः एव सत्यम्।

अहं मरणात् भीतः नास्मि, मम यशः न दूषितं भवति। सत्येन मम यशः शोभनं भवति।

तव पिता कुत्र अस्ति? मम पिता अत्र नास्ति। किं करोमि? कुत्र गच्छामि? कुत्र गमनं इदानीं श्रेयः अस्ति? वद, शीघ्रं वद।

यदा राम अन्नं पश्यति तदा त्वं अन्नं खाद। यथा वानरः वृक्षं आरोहति तथा त्वं अपि करोषि किम्? य पुरुषः अद्य तत्र गच्छति सः अद्य एव अत्र कथं भविष्यति? कदा त्वं तेन सह तत्र गमिष्यसि? अहं त्वया सह अद्य तत्र नैव गमिष्यामि। स कुत्र भोजनं करोति?

## संधि किये हुए वाक्य।

यदि स मनुष्य इदानीमेव खादितुं नेच्छति, तर्हि तस्मै न देहि। क इदानीं मोदकं खादितुमिच्छति? यथा त्वमिच्छसि तथा कुरु। सत्यमेव धर्मं। अहं मरणाद्भीतो नास्मि, मम यशो न दूषितं भवति। तव पिता कुत्राऽस्ति? मम पिताऽत्र नास्ति। कुत्र गमनमिदानीं श्रेयोऽस्ति?



# पाठ ५

## शब्द।

| | | | |
|---|---|---|---|
| तडाग | – तालाब | आरोहति | – (वह) चढता है |
| वृक्षः | – वृक्ष | आरोहसि | – (तू) चढता है |
| अश्व | – घोडा | आरोहामि | – (मैं) चढता हूं |
| वृषभ | – बैल | आरोढुं | – चढनेके लिये |
| वत्सः | – बछडा | आरूढः | – चढा हुआ |
| देशः | – देश | गंध | – सुगंध |

## संस्कृत-वाक्य ।

१ तस्य तडागस्य समीपे एकः वृक्षः अस्ति। २ तस्य तडागस्य जले शोभनं रक्तं कमलं अस्ति। ३ तत् रक्तं कमलं अधुना अत्र आनय। ४ स भूपः इदानीं अश्वं आरोहति। ५ तस्य सेवकः उष्ट्रं आरोहति। ६ तस्य देशस्य अयं राजा धार्मिकः अस्ति।

## भाषा-वाक्य।

१ उस तालावके समीप एक वृक्ष है। २ उस तालावके जलमें सुंदर लाल कमल है। ३ वह लाल कमल तू इस समय यहां ला। ४ वह राजा अब घोडेपर चढता है। ५ उसका सेवक ऊंटपर चढता है। ६ उस देशका यह राजा धार्मिक है।

अब इन संस्कृत वाक्योंके भाषावाक्य बनाइए—

## संस्कृत-वाचन-पाठः।

तव अश्वः कुत्र अस्ति? मम अश्वः तस्य वृक्षस्य समीपे एव अस्ति। कस्य वृक्षस्य समीपम्? तत्र उद्याने यः वृक्षः अस्ति, तस्य समीपं मम अश्वः इदानीं अस्ति। तत्र अनेन मार्गेण गच्छ, पश्य च तं अश्वं तत्र। तव अश्वस्य कः वर्णः अस्ति? मम अश्वस्य श्वेतः वर्णः अस्ति। तर्हि श्वेतवर्णः अश्वः तस्मिन् उद्याने इदानीं नास्ति एव। कुत्र गतः केन वा नीतः न जानामि।

निम्नलिखित भाषावाक्योंके संस्कृत वाक्य बनाइए।

## शब्द ।

| | |
|---|---|
| पंडितः – पंडित | शूद्रः – शूद्र |
| ब्राह्मणः – ब्राह्मण | निषादः – निषाद |
| क्षत्रियः – क्षत्रिय | धर्मः – धर्म |
| वैश्यः – वैश्य | उपदेशकः– उपदेशक |
| उपदेशः – उपदेश | प्रवचनं – प्रवचन |
| श्रवणं – श्रवण, सुनना | भाषणं – भाषण |
| व्याख्यानं – व्याख्यान | कथनं – कहना |

## संस्कृत वाक्य ।

१ कः सः पंडितः ? २ यः तत्र व्याख्यानं करोति ? ३ तस्य उपदेशस्य श्रवणाय त्वं आगच्छसि किम् ? ४ तस्य धर्मप्रवचनं उत्तमम् । ५ किं तस्य भाषणं त्वया श्रुतम् ? ६ तस्मिन् नगरे यथा ब्राह्मणः तथा क्षत्रियः अपि अस्ति । ७ परंतु तत्र निषादः नास्ति । ८ तत्र धर्मस्य प्रवचनं कः करोति ? ९ पण्डितः विष्णुमित्रः करोति ।

## भाषावाक्य ।

१ कौन वह पंडित है ? २ जो वहां व्याख्यान देता है ? ३ उसके उपदेशको सुननेके लिये क्या तू आता है ? ४ उसका धर्मप्रवचन उत्तम है । ५ क्या उसका भाषण तूने सुना है ? ६ उस शहरमें जैसा ब्राह्मण वैसा क्षत्रिय भी है । परंतु वहां निषाद नहीं है । वहां धर्मका प्रवचन कौन करता है ? ९ पंडित विष्णुमित्र करता है।

## संस्कृत-वाचन-पाठः ।

मम बिडालः कुत्र अस्ति ? यत्र तव मोदकः अस्ति । तव मोदकस्य शोभनः गंधः आगच्छति । अत एव तत्र तव मार्जारः

गतः। त्वं मार्जारेण सह उद्यानं गच्छ। मार्जारः दुग्धं पिबति, अतः इदानीं उद्यानं आगन्तुं न इच्छति, तर्हि तं सायंकाले तत्र नय।

त्वया तस्य वृक्षस्य पुष्पं न आनीतं किम्? नहि। मया न आनीतम्। इदानीं सः पुष्पं आनयति।

मम अश्वः रामचन्द्रेण नीतः। स रामचंद्रः कदा अत्र आगमिष्यति? तस्मात् नगरात् कदा स आगमिष्यति? सः अश्वं आरोहति किम्? यथा त्वं अश्वं आरोहसि, तथा एव सः अपि अश्वं आरोहति।

निषादः वने भवति। शूद्रः नगरे भवति। तथा ब्राह्मणः कुत्र भवति? त्वं धर्मं जानासि किम्? निषादः धर्मं न जानाति। पण्डितः धर्मस्य वचनं जानाति एव।

तव मार्जारः इदानीं एव तेन नीतः। स पुरुषः तव अश्वं आरोहति किम्? स केन मार्गेण तत् नगरं गच्छति? यदा रामः नगरं गतः तदा त्वया किं कृतम्? त्वया तस्य बिडालः किं न आनीतः। कः वने भवति? कः च गृहे भवति? किं करोषि? यथा पण्डितः वदति तथा त्वं वदसि किम्? अहं पण्डितः अस्मि।

## संधि किये हुए वाक्य।

मम बिडालः कुत्राऽस्ति? यत्र तव मोदकोऽस्ति। तव मोदकस्य शोभनो गन्ध आगच्छति। अत एव तत्रैव मार्जारो गतः। त्वं मार्जारेण सहोद्यानं गच्छ।

---

# पाठ ६

अब इस पाठमें आप कुछ श्लोक पढ़िये—

दुःखादुद्विजते सर्वः सर्वस्य सुखमीप्सितम्॥

(महाभारत शांति. १३९।६१)

पद- दुःखात्। उद्विजते। सर्वः। सर्वस्य। सुखं। ईप्सितम्।

अन्वयः— सर्वः दुःखात् उद्विजते । सर्वस्य सुखं ईप्सितम् ।
अर्थ— सब दुःखसे दुःखी होते हैं, सबको सुख ही इष्ट है ।

यच्च कामसुखं लोके यच्च दिव्यं महत्सुखम् ।
तृष्णाक्षयसुखस्यैते कलां नाऽर्हन्ति षोडशीम् ॥
( महाभारत शांति, १७४।४८ )

पद— यत् । च । काम+सुख । लोके । यत् । च । दिव्यं । महत् । सुखम् । तृष्णा+क्षय+सुखस्य । एते । कलां । न । अर्हन्ति । षोडशीम् ।

अन्वय— लोके यत् काम+सुखं, यत् च दिव्यं महत् सुखं, एते तृष्णा+क्षय+सुखस्य षोडशीं कलां न अर्हन्ति ।

अर्थ— लोकमें जो कामका सुख है और जो बडा दिव्य सुख है, वे (तृष्णा-क्षय-सुखस्य) इच्छाके नाशके सुखके ( षोडशीं ) सोळहवें (कला) -भागकी भी ( न अर्हन्ति ) योग्यता नहीं रखते ।

प्रायेण श्रीमतां लोके भोक्तुं शक्तिर्न विद्यते ।
काष्ठान्यपि हि जीर्यन्ति दरिद्राणां च सर्वशः ।
( महाभारत उद्योग ३४।५१ )

पद— प्रायेण । श्रीमतां । लोके । भोक्तु । शक्तिः । न । विद्यते । काष्ठानि । अपि । हि । जीर्यन्ति । दरिद्राणां । च । सर्वशः ॥

अन्वयः— लोके प्रायेण श्रीमतां भोक्तुं शक्तिः न विद्यते । दरिद्राणां च सर्वशः काष्ठानि अपि हि जीर्यन्ति ।

अर्थ— जगत्में ( प्रायेण ) बहुधा श्रीमानोंमें ( भोक्तुं ) भोग भोगनेकी शक्ति नहीं ( विद्यते ) होती है । परंतु दरिद्रोंको सब ( काष्ठानि ) लकडियां भी ( जीर्यन्ति ) हजम हो जाती हैं ।

अर्थात् धनी मनुष्य उत्तम अन्नको भी पचा नहीं सकता, परंतु दरिद्री मनुष्यको, लकडियां भी खानेपर हजम हो जाती हैं ।

सर्वं परवशं दुःखं सर्वमात्मवशं सुखम्।
एतद्विद्यात्समासेन लक्षणं सुखदुःखयोः ॥ ( मनुस्मृति ४।१६० )

पद— सर्वं । पर+वशं । दुःखं । सर्वं । आत्मवशं । सुखं । एतत् । विद्यात् । समासेन । लक्षणं । सुखदुःखयोः ॥

अन्वयः— पर+वशं सर्वं दुःखं । आत्म+वशं सर्वं सुखं । समासेन सुख+दुःखयोः एतत् लक्षणं विद्यात् ॥

अर्थ— ( पर+वशं ) दूसरेके अधीन होना सब दुःख है और अपने अधीन रहना सब सुख है। ( समासेन ) सारांशसे सुख और दुःखका ( एतत ) यह लक्षण ( विद्यात् ) जान लें। पराधीनता दुःख और स्वाधीनता सुख है।

✓ सुखं वा यदि वा दुःखं प्रियं वा यदि वाऽप्रियम् ।
प्राप्तं प्राप्तमुपासीत हृदयेनाऽपराजितः ॥
( म० भारत शांति० २५।२६ )

पद- सुखं । वा । यदि । वा । दुःखं । प्रियं । वा । यदि । वा । अप्रियं । प्राप्तं । प्राप्तं । उपासीत । हृदयेन । अपराजितः ।

अन्वयः— सुखं वा यदि वा दुःखं, प्रियं वा यदि वा अप्रियं प्राप्तं प्राप्तं हृदयेन अपराजितः उपासीत ।

अर्थ— सुख किंवा दुःख, प्रिय किंवा अप्रिय जो प्राप्त होवे, उसको हृदयसे पराजित न होते हुए ( उपासीत ) स्वीकार करे।

सुख दुःख, प्रिय अप्रिय जो भी कुछ प्राप्त हो, उसको स्वीकार करता जाय, परंतु कभी हृदय उत्साहहीन न बनावे।

वेदः स्मृतिः सदाचारः स्वस्य च प्रियमात्मनः।
एतच्चतुर्विधं प्राहुः साक्षाद्धर्मस्य लक्षणम् ॥ ( मनुस्मृति २।१२ )

पद- वेदः । स्मृतिः । सत्+आचारः । स्वस्य । च । प्रियं । आत्मनः । एतत् । चतुर्विधं । प्राहुः । साक्षात् । धर्मस्य । लक्षणम् ।

अन्वय.— वेदः, स्मृतिः, सदाचारः, स्वस्य आत्मनः प्रियं च, एवत् चतुर्विधं धर्मस्य साक्षात् लक्षणं प्राहुः ।.

अर्थ— श्रुति, स्मृति, सत्पुरुषोंका आचार तथा अपने आत्माका प्रियाचरण यह ( चतुर्-विधं ) चार प्रकारका धर्मका ( साक्षात् ) प्रत्यक्ष लक्षण है, ऐसा ( आहुः ) कहते हैं ।

पाठक इन श्लोकोंको बार बार पढें, इतनी बार पढें कि अंतमें श्लोक पढते ही उसका अर्थ ध्यानमें आ जावे । इस रीतिसे पाठक पढते जायेंगे, तो एक वर्षमें रामायण, महाभारत समझने योग्य संस्कृत उनको आ सकता है ।

## संधि किये हुए वाक्य ।

तडागस्य समीप एको वृक्षोऽस्ति । जले शोभनं एकं कमलमस्ति । तद्रक्त कमलं त्वमधुनात्रानय । स भूप इदानीमश्वमारोहति । तस्य सेवक उष्ट्रमारोहति । तस्य देशस्यायं राजा धार्मिकोऽस्ति ।

तवाश्वः कुत्रास्ति ? ममाश्वस्तस्य वृक्षस्य समीपमेवास्ति । तत्रोद्याने यो वृक्षोऽस्ति तस्य समीपं ममाश्व इदानीमस्ति । तत्रानेन मार्गेण गच्छ, पश्य च तमश्वं तत्र । तवाश्वस्य को वर्णोऽस्ति ? ममाऽश्वस्य श्वेतो वर्णोऽस्ति । तर्हि श्वेतवर्णोऽश्वस्तस्मिन्नुद्याने इदानीं नास्त्येव । कुत्र गतो वा केन नीतो वा न जानामि ।

कः स पण्डितः ? यस्तत्र व्याख्यानं करोति ? तस्योपदेशस्य श्रवणाय त्वमागच्छसि किम् ? तस्य धर्मप्रवचनमुत्तमम् । तस्मिन्नगरे यथा ब्राह्मणस्तथा क्षत्रियोऽप्यस्ति । स रामचंद्रः कदात्रागमिष्यति ?

---

## पाठ ७

इस पाठमें निम्नलिखित शब्द स्मरण कीजिये—

### शब्द ।

| | | | |
|---|---|---|---|
| पितृव्यः | – चचा | पालकः | – पालनेवाला |
| पुत्रः | – पुत्र | मातुलः | – मामा |
| जनकः | – पिता | मातामहः | – माताका पिता |
| पितामहः | – पिताका पिता, दादा। | याजकः | – यज्ञ करनेवाला |
| प्रपितामहः | – दादाका पिता | संयोगः | – संयोग |
| मूषकः | – चूहा | वसति | – वसता है |
| | | वत्स्यति | – रहेगा |

इन शब्दोंका उपयोग करके अब वाक्य बनाइये—

१ तव पितृव्यः कुत्र अस्ति इदानीम् ? २ मम पितृव्यः इदानीं उद्यानं गतः। तस्य मातुलः कदा अत्र आगमिष्यति ? ४ तव पुत्रः मम गृहं गत्वा पितामहस्य गृहं गमिष्यति। ५ तस्य जनकः इदानीं अत्र एव अस्ति। ६ तव मातुलः तस्य जनकः अस्ति। ७ तव जनकः तस्य पितृव्यः भवति। ८ स याजकः तत्र यज्ञं करोति।

### संस्कृत वाक्य ।

१ तेरा चचा कहां है अब ? २ मेरा चचा अब बागमें गया है। ३ उसका मामा कब यहां आवेगा ? ४ तेरा पुत्र मेरे घर जाकर दादाके घर जायगा। ५ उसका पिता अब यहां ही है। ६ तेरा मामा उसका पिता है। ७ तेरा पिता उसका चचा होता है। ८ यह याजक यहां यज्ञ करता है।

## संस्कृत--वाचन--पाठः ।

स तत्र दुग्धं पिबति । तव पितामहः अद्य किं करोति ? मम पितामहः इदानीं दुग्धं न पिबति । याजकः यज्ञं करोति । अहं जलं पास्यामि । तव मातामहः इदानीं जलं नैव पास्यति । सः अन्नं भक्षयति । अहं अन्नं भक्षयामि, जलं च पिबामि । यत्र मार्जारः अस्ति तत्र मूषकः अपि अस्ति । त्वं कदापि दण्डं न पश्यसि । अहं इदानीं तव दण्डं न पश्यामि । कुमारः बहु धावति । स ब्राह्मणः कुत्र अस्ति ? यज्ञस्य समीपे स इदानीं गतः । तस्य कः अपराधः ? तेन किं कृतम् ? वानरः वृक्षस्य उपरि वसति । वेदे यत् ज्ञानं अस्ति, तत् किं त्वं जानासि ? अहं तत् जानामि त्वया ज्ञातं चेत् कथय । जलस्य पानं कर्तुं इच्छसि किम् ? तडागस्य समीपे एकः वृक्षः अस्ति, तं पश्य ।

अब निम्नलिखित शब्द कण्ठस्थ कीजिये—

| | |
|---|---|
| आश्रमः – आश्रम | देहः – शरीर |
| नागः – सांप | तापः – गर्मी, धूप |
| याचकः – मांगनेवाला | दुर्गः – किला |
| वायसः – कौवा | कोपः – क्रोध |
| शुकः – तोता | रागः – प्रीति |
| वृष्टिः – वर्षा | इप्सितम् – इच्छा किया हुआ |

## संस्कृत वाक्य ।

१ कण्वस्य आश्रमः कुत्र अस्ति ? २ आचार्यस्य कण्वस्य आश्रमः तस्मिन् वने अस्ति । ३ तस्मिन् वृक्षे वायसः अस्ति, परंतु शुकः नास्ति । ४ सूर्यस्य तापः अद्य बहु भवति । ५ तस्य शोभनः देहः अस्ति । ६ तस्य नृपस्य एकः दुर्गः अस्ति । ७ तस्य आश्रमे एकः शिष्यः पठति ।

१ कण्वका आश्रम कहां है ? २ आचार्य कण्वका आश्रम उस वनमें है ।

२ उस वृक्षमें कौआ है, परंतु तोता नहीं है। ४ सूर्यकी उष्णता आज बहुत है। ५ उसका उत्तम शरीर है। ६ उस राजाका यह किला है। ७ उसके आश्रममें एक शिष्य पढता है।

## संस्कृत-वाचन-पाठः ।

ब्राह्मणः प्रथमः वर्णः। क्षत्रियः द्वितीयः वर्णः। वैश्यः तृतीयः वर्णः। शूद्रः चतुर्थः वर्णः। निषादः पंचमः। स पंडितः धर्मस्य उपदेशं करोति। त्वं किं वदसि? पंडितस्य वचनं धर्मवचनं अस्ति। यथा वृक्षस्य पत्रं तथा एव पुस्तकस्य अपि पत्रं अस्ति।

## संधि किये हुए वाक्य।

ब्राह्मणः प्रथमो वर्णः। क्षत्रियो द्वितीयो वर्णः। वैश्यस्तृतीयो वर्णः। शूद्रश्चतुर्थो वर्णः। स पंडितो धर्मस्योपदेशं करोति। पण्डितस्य वचनं धर्मवचनमस्ति। सर्वस्य मनुष्यस्य सुखमीप्सितम्। यदा बलभद्रस्तत्र गच्छति, तदा रामचन्द्रोऽपि गच्छत्येव। यथा सूर्यस्तपति न तथा सोमः। सूर्यस्य प्रकाशस्तस्य गृहे नास्त्येव॥

## पाठ ८

अब इन वाक्योंको पढिये—

तव भाषणं मधुरं अस्ति, परंतु न तथा तस्य भाषणं मधुरं भवति। सर्वस्य मनुष्यस्य सुखं ईप्सितम्। यदा बलभद्रः तत्र गच्छति तदा रामचंद्रः अपि गच्छति एव। तव कोपस्य किं कारणम्? यथा सूर्यः तपति न तथा सोमः। सूर्यः उष्णः सोमः शांतः। सूर्यस्य प्रकाशः तस्य गृहे नास्ति एव। स शोभनः

स्वर्गः । कदा त्वं तेन मार्गेण गमिष्यासि ? अहं सदा तेनैव मार्गेण गमिष्यामि । तव पात्रं अत्र आनय ।

इस पाठमें आप निम्नलिखित शब्द स्मरण कीजिये—

शब्द ।

| | |
|---|---|
| सैनिकः = सिपाही | मेघः = मेघ, बादल |
| सिंहः = सिंह, बबर, शेर | कपोतः = कबूतर |
| शृगालः = गीदड | पार्थिवः = राजा |
| अनर्थः = अनर्थ | प्रभावः = पराक्रम |
| ग्रन्थः = पुस्तक | पराभवः = पराभव |

संस्कृत वाक्य ।

१ पश्य सैनिकः तत्र अस्ति । २ स कस्मात् स्थानात् आगतः ! ३ स पूर्वदेशात् अत्र आगतः । ४ तव कपोतः अत्र नास्ति किम् ? ५ तस्य वीरस्य महान् प्रभावः । ६ त्वं तं ग्रंथं पठ । ७ आकाशे मेघः नास्ति । ८ मेघात् वृष्टिः भवति ।९ त्वं किं पठसि इदानीम् ?

भाषा वाक्य।

१ देख सिपाही वहां है। २ वह किस देशसे आया है ? ३ वह पूर्वदेशसे यहां आया है। ४ तेरा कबूतर यहां नहीं है क्या ? ५ उस वीरका बडा प्रभाव है। ६ तू उस पुस्तकको पढ। ७ आकाशमें बादल नहीं है। ८ बादलसे वर्षा होती है। ९ तू क्या पढता है अब ?

संस्कृत–वाचन–पाठः।

त्वं किं वदसि ? स किमपि नैव वदति । त्वं कुत्र पठसि ? तत्र सः पठति किम् ? नहि, स तत्र किमपि न पठति। कः तत्र पठति ? वायुः आकाशे भवति । सोमः अंतरिक्षे भवति । सूर्यः रात्रौ कुत्र भवति ? सोमः इदानीं कुत्र अस्ति ? स मनुष्यः इदानीं अत्र किं

न आगच्छति? भूपः इदानीं स्नानाय गतः। त्वं अधुना दुग्ध-पानाय आगच्छसि किम्? तस्य करे मम पुस्तकं अस्ति। देवदत्तस्य पुस्तकं शीघ्रं पठ। तस्मात् पुस्तकात् एकं पत्रं आनय। सः नगरात् नगरं सदा किमर्थं गच्छति? यत्र जलं नास्ति, तत्र मा गच्छ। स धीरः पुरुषः इदानीं अत्र नास्ति। मम श्वेतः अश्वः अत्र आगच्छति। तव कृष्णः अश्वः कुत्र गतः? वृक्षस्य कोमलं पत्रं पश्य। तत् कथं मनोहरं अस्ति।

निम्नलिखित क्रियाएं अब स्मरण कीजिये—

धारयति – (वह) धारण करता है
धारयसि – (तू) धारण करता है
धारयामि – (मैं) धारण करता हूं
धारयिष्यति – (वह) धारण करेगा
भ्रामयति – (वह) घुमाता है
भ्रामयसि – (तू) घुमाता है
भ्रामयामि – (मैं) घुमाता हूं
क्रीडति – (वह) खेलता है
क्रीडसि – (तू) खेलता है
क्रीडामि – (मैं) खेलता हूं
क्रीडिष्यति – (वह) खेलेगा
भ्रामयिष्यति – (वह) घुमावेगा
उत्तिष्ठति – (वह) उठता है

## संस्कृत वाक्य।

१ ईश्वरः बलेन सर्वं जगत् धारयति। २ त्वं हस्तेन किं धारयसि? ३ अहं सर्वं धारयामि। ४ देवः सर्वं जगत् भ्रामयति। ५ त्वं इदानीं किं न क्रीडसि? ६ तस्य पुत्रः श्वः क्रीडिष्यति किम्? ७ स चक्रं नैव भ्रामयिष्यति। ८ स पुरुषः कुत्र इदानीं धावति?

## पाठ ९

### संस्कृत--वाक्य ।

१ त्वं किं न क्रीडिष्यसि ? २ अहं अद्य एव क्रीडिष्यामि। ३ कुंभकारः चक्रं दंडेन इदानीं भ्रामयिष्यति। ४ त्वं भारं धारयिष्यसि किम् ? ५ त्वं अद्य सायं कुत्र क्रीडिष्यसि ?

### भाषा--वाक्य ।

१ तू क्यों नहीं खेलेगा ? २ मैं आजही खेलूंगा। ३ कुम्हार चक्रको दंडसे अब घुमावेगा। ४ तूं भार धारण करेगा क्या ? ५ तू आज शामको कहां खेलेगा ?

अब इस पाठमें आपको कुछ संस्कृत श्लोकोंका परिचय करा देते हैं--

( १ )

तत्त्वज्ञः सर्वभूतानां योगज्ञः सर्वकर्मणाम् ॥
उपायज्ञो मनुष्याणां नर पंडित उच्यते ॥

( महाभारत उद्योग० अ० ३३।३२ )

*पद- तत्त्व+ज्ञः । सर्व+भूतानां । योग+ज्ञः । सर्व+कर्मणां* उपाय+ज्ञः । मनुष्याणां । नरः । पंडितः । उच्यते ॥

अन्वयः— सर्व-भूतानां तत्त्व-ज्ञः, सर्व-कर्मणां योग-ज्ञः, मनुष्याणां उपाय-ज्ञः, पंडित उच्यते ॥

अर्थ— सब भूतोंके तत्त्वको ( ज्ञः ) जाननेवाला, सब कर्मोंके ( योग-ज्ञ. ) प्रयोगको जाननेवाला, मनुष्योंमें जो ( उपाय-ज्ञः ) उपाय जाननेवाला ( नरः ) मनुष्य है, [ उसीको ] पंडित ( उच्यते ) कहा जाता है।

( २ )

स्वमर्थं यः परित्यज्य परार्थमनुतिष्ठति ।
मिथ्या चरति मित्रार्थे यश्च मूढः स उच्यते ॥

( महाभारत उद्योग० अ० ३३।३६ )

पद—स्वं । अर्थं । यः । परि+त्यज्य । पर+अर्थं । अनु+तिष्ठति । मिथ्या । चरति । मित्र+अर्थे । यः । च । मूढः । सः । उच्यते ॥

अन्वयः— यः स्वं अर्थं परित्यज्य, परार्थं अनुतिष्ठति, यः च मित्रार्थे मिथ्या चरति, सः मूढ उच्यते ॥

अर्थ— जो ( स्वयं ) अपने ( अर्थं ) अभीष्ट कार्यको ( परि-त्यज्य ) छोड़कर ( पर-अर्थं ) शत्रुके कार्यका ( अनुतिष्ठति ) अनुष्ठान करता है और जो ( मित्र-अर्थे ) मित्रके कार्यमें ( मिथ्या ) झूठा ( चरति ) चलता है, वह मूढ ( उच्यते ) कहा जाता है ॥

( ३ )

अमित्रं कुरुते मित्रं मित्रं द्वेष्टि हिनस्ति च ।
कर्म चाऽऽरभते दुष्टं तमाहुर्मूढचेतसम् ॥

( म० भारत उद्यो० अ० ३३।३८ )

पद- अ+मित्रं । कुरुते । मित्रं । मित्रं । द्वेष्टि । हिनस्ति । च । कर्म । च । आरभते । दुष्टं । तं । आहुः । मूढ-चेतसम् ॥

अन्वयः— अमित्रं मित्रं कुरुते, मित्रं द्वेष्टि, हिनस्ति च । दुष्टं कर्म आरभते । तं मूढ चेतसं आहुः ॥

अर्थ— जो ( अ-मित्रं ) शत्रुको मित्र ( कुरुते ) करता है, मित्रसे ( द्वेष्टि ) द्वेष करता है और ( हिनस्ति ) उसका घात करता है तथा ( दुष्टं ) दोषयुक्त कर्म ( आरभते ) आरंभ करता है, उसको ( मूढ+चेतसं ) मूढ बुद्धिवाला ( आहुः ) कहते हैं ।

( ४ )

एकः क्षमावतां दोषो द्वितीयो नोपपद्यते ।
यदेनं क्षमया युक्तमशक्तं मन्यते जनः ॥

( महाभारत उद्योग० ३३।५३ )

पद- एकः । क्षमा+वतां । दोषः । द्वितीयः । न । उपपद्यते । यत् । एनं । क्षमया । युक्तं । अ+शक्तं । मन्यते । जनः ॥

अन्वयः— क्षमावतां एकः दोषः, द्वितीयः न उपपद्यते । यत् क्षमया युक्तं एनं जनः अशक्तं मन्यते ॥

अर्थ— ( क्षमा-वतां ) क्षमा धारण करनेवालोंका एक ही दोष है, दूसरा नहीं ( उपपद्यते ) होता है। ( यत् ) क्योंकि ( क्षमया ) क्षमासे युक्त ( एनं ) इस पुरुषको ( जनः ) लोग अशक्त ( मन्यते ) मानते हैं॥

( ५ )

सोऽस्य दोषो न मंतव्यः क्षमा हि परमं बलम्।
क्षमा गुणो ह्यशक्तानां शक्तानां भूषणं क्षमा॥
( म० भा० उद्योग० ३३।५४ )

पद— सः। अस्य। दोषः। न। मंतव्यः। क्षमा। हि। परमं। बलं। क्षमा। गुणः। हि। अ+शक्तानां। शक्तानां। भूषणं। क्षमा॥

अन्वयः— अस्य सः दोषः न मंतव्यः, हि क्षमा परमं बलम्। हि अशक्तानां गुणः क्षमा, शक्तानां क्षमा भूषणम्॥

अर्थ— ( अस्य ) इसका वह दोष नहीं ( मंतव्यः ) मानना चाहिये, ( हि ) क्योंकि क्षमा ( परमं ) श्रेष्ठ बल ( है )। क्योंकि क्षमा अशक्तोंका गुण [ और ] ( शक्तानां ) बलिष्ठोंका भूषण है।

इस प्रकार आप कई सुगम श्लोक पढकर समझ सकते हैं। श्लोकोंके पद कैसे बने और पदोंसे अन्वय कैसा हुआ, इसकी ओर ध्यान रखते जाइये, तो अर्थ समझना सुगम होगा। शब्द आपको आते होंगे तो अर्थ आपके ध्यानमें आ जायगा। श्लोकके पद और पदोंका अन्वय करना ही विशेष कठिन है। परंतु यह आपके लिये थोडी देरीके पश्चात् ही सुगम हो जायगा।

## संधि किये हुए वाक्य।

ईश्वरो बलेन सर्वं जगद्धारयति। त्वं हस्तेन किं धारयस्यहं सर्वं धारयामि देवः सर्वं जगद् भ्रामयति। त्वमिदानीं किं न क्रीडसि? स पुरुषः कुत्रेदानीं धावति? अहमद्यैव क्रीडिष्यामि। कुंभकारश्चक्रं दण्डेनेदानीं भ्रामयिष्यति। त्वमद्य सायं कुत्र क्रीडिष्यसि? वायुराकाशे भवति। सोमोऽन्तरिक्षे भवति। सोम इदानीं कुत्रास्ति? स मनुष्य इदानीमत्र किमर्थं नागच्छति?

## पाठ १०

अब निम्नलिखित वाक्य पढ़िये। यदि पिछला पाठ आपका ठीक हुआ है, तो आपको ये वाक्य पढ़ते ही समझमें आवेंगे।

सः पुरुषः पण्डितः अस्ति। सः तत्वज्ञः योगज्ञः उपायज्ञः च अस्ति। यः स्वं अर्थं न जानाति, सः कदापि पंडितः न भवति। यः मित्रस्य अर्थे मिथ्या वदति, सः नरः शोभनः न भवति। यः मूढः जनः अस्ति, सः पंडितः कथं भवति? पंडितः प्रातःकाले शीतेन जलेन स्नानं करोति। मूढः मध्याह्ने अपि स्नानं न करोति। यः अमित्रं मनुष्यं मित्रं करोति, सः चतुरः। यः मित्रं अमित्रं करोति, सः मूढः। यः पुरुषः स्वमित्रं द्वेष्टि, सः मूढः। सः कदापि स्वमित्रं न द्वेष्टि, न तं हिनस्ति। मूढः मनुष्यः मित्रं हिनस्ति। सः दुष्टं कर्म अधुना आरभते। तस्य एकः एव दोषः अस्ति, न मम। तव कः दोषः? मम न कः अपि दोषः। सः तस्य एव दोषः, तत्र मम कः अपि दोषः नास्ति। तस्य एक एव दोषः, न द्वितीयः। तस्य एकं एव पुस्तकं अत्र अस्ति। मम एकं एव वस्त्रं तत्र अस्ति। तव एकं एव आभूषणं मम गृहे अस्ति। सः बलिष्ठं अपि पुरुषं अशक्तं मन्यते। सः जनः अशक्तं अपि पुरुषं बलिष्ठं मन्यते। अस्य सः दोषः त्वया न मंतव्यः। तस्य सः दोषः नास्ति किम्? अशक्तस्य गुणः क्षमा एव अस्ति। धीरस्य भूषणं क्षमा भवति। तस्य परमं बलं क्षमा एव अस्ति। यदा त्वं तत्र गमिष्यसि, तदा तं पश्य। कः तस्य गुणः अस्ति? इदानीं सः कुत्र अस्ति? सः अत्र न अस्ति किम्? तस्य ज्ञानं एव बलं अस्ति। तस्य पुस्तकं कुत्र अस्ति? यत्र तस्य वस्त्रं अस्ति, तत्र एव पुस्तकं अस्ति। त्वं तस्य वृक्षस्य शोभनं फलं खादसि किम्? अहं वृक्षस्य

शोभन फल खादामि। स मूढ मनुष्य तत्र किं करोति ? पश्य, अस्य वृक्षस्य शोभन प त्रम्। अद्य सूर्यस्य शोभन प्रकाश अस्ति। त्व पडितः असि किम् ? त्व इदानीं एव कुत्र गच्छासि ? स प्रातर् एव कुत्र धावति ? तव पुत्र इदानीं एव किमर्थ धावति ? यथा त्व धावासि तथा स अपि धावति। यथा विष्णुमित्र वदति तथा गणेश अपि वदति। गणेशस्य गृह कुत्र अस्ति ? कानपूरनगरे पडितस्य गणेशस्य गृह अस्ति। कथ पडित गणेशदत्त वदति ? यत्र पडित गणेशदत्त गच्छति तत्र एव पडित गोपाल अपि गच्छति। स इदानीं हरिद्वार प्रति गत। त्व कु त्र इदानीं एव गच्छासि ? यत्र फल भवति त त्र अन्न जल च भवति। यत्र जल न भवति, तत्र अन्न भवति किम् ? यत्र जल नास्ति तत्र अन्न न एव भवति। तस्मिन् कूपे जल नास्ति किम् ? तस्मिन् कूपे इदानीं प्रभूत जल अस्ति। तस्य गृहे धन नास्ति, परतु अन्न अस्ति। तव गृहे अन्न नास्ति, परतु धन अस्ति। मम गृहे अन्न अस्ति तथा धन च अपि अस्ति। तस्य पुत्र इदानीं एव मम पुस्तक पठति। तव पुत्र इदानीं किं न पठति ? त्व मूढ न असि। स मूढ नास्ति। अह न मूढ असि, परतु अह पडित असि। विष्णुमित्र इदानीं अत्र पत्र लिखति। देवदत्त कदापि पत्र न लिखति। यज्ञसेन वने किं करोति ? त्व नगरे किं करोषि ? वद इदानीं एव। कथ स शीघ्र एव युक्त वदति ? तथा त्व न शीघ्र शोभन च वदासि। यथा त्व वदासि तथा अह अपि वदामि। रामचद्र सदा एव सत्य वदति। भूमित्र कदापि मिथ्या न वदति। स सर्वदा एव मिथ्या न वदति। स अद्य वृक्षात् फल न आनयति। यथा रामचद्र अन्न पचति तथा त्व अपि पचासि किम् ? यदा कदापि वन गत तदा क अन्यः वन गत ? तत्र वानर फल खादति।

इस ढंगसे आप अनेक वाक्य बना सकते हैं और बोल तथा लिख सकते हैं। इस रीतिसे वाक्य बनाने योग्य आपका अभ्यास अब हुआ है।



## पाठ ११

निम्नलिखित शब्द अब स्मरण कीजिये—

| | |
|---|---|
| उद्यमः = उद्योग | ओष्ठः = होंठ |
| पुरुषार्थः = पुरुषार्थ | प्रवाहः = प्रवाह |
| द्विरेफः = भ्रमर | तरंगः = लहर, तरंग |
| चातकः = चातकपक्षी | कपोलः = गाल |
| वर्णः = रंग, वर्ण | स्नेहः = मित्रता |
| स्तेनः = चोर | व्याधः = शिकारी |
| ब्राह्मणः = ब्राह्मण | |

### संस्कृत-वाक्य।

१ हे मनुष्य! त्वं सदा उद्यमं कुरु। २ स वीरः पुरुषः सदा पुरुषार्थं करोति। ३ द्विरेफः तस्मिन् पुष्पे इदानीं अस्ति। ४ पश्य, कथं स तस्मात् पुष्पात् अत्र आगच्छति। ५ व्याधः वने व्याघ्रं पश्यति। ६ मेघं दृष्ट्वा चातकः शब्दं करोति। ७ स अन्नं पचति।

## संस्कृत-वाचन-पाठः ।

तस्मै ब्राह्मणाय प्रभूतं जलं देहि । यदा रामभद्रः नगरं गच्छति, तदा त्वं अपि तत्र गच्छ । नो चेत् अहं तत्रैव आगमिष्यामि । त्वं अत्र आगच्छ अथवा अहं तत्र गच्छामि । त्वं इदानीं एव नगरात् चन्दनं अत्र आनय । सः तस्य गृहात् गोदुग्ध तत्र नयति । तव कपोलः शोभनः अस्ति । न तथा तस्य । अत्र जलस्य शोभनः प्रवाहः अस्ति । त्वं पश्यसि किम् ? पश्य सः व्याघ्रः तत्र वने कथं धावति । किमर्थं स एवं तत्र धावति ? सूर्यस्य आतपे त्वं किं न गच्छसि ? तस्य मनुष्यस्य कृष्णः वर्णः अस्ति । यः पुरुषार्थं करोति, स एव धनं प्राप्नोति । तव मित्र ब्राह्मण इदानीं कुत्र अस्ति ? यदा स गृहं गच्छति तदा एव स उद्यमं करोति । तस्य वस्त्रं त्वया कुत्र रक्षितम् ? तस्य वस्त्रं मया अत्र रक्षितं, तथा च तस्य चक्रं अपि अत्रैव रक्षितम् ।

### शब्द ।

| | | | |
|---|---|---|---|
| दीपः | = दीप, दीया | ज्वलति | = ( वह ) जलता है |
| शिष्यः | = शिष्य | खनति | = ( वह ) खोदता है |
| बुधः | = ज्ञानी | आरोहति | = ( वह ) चढ़ता है |
| अलंकारः | = आभूषण | जानाति | = ( वह ) जानता है |
| दासः | = दास, नौकर | पालयति | = (वह) पालन करता है |

### संस्कृत वाक्य ।

१ तत्र दीपः ज्वलति । २ वानरः वृक्षं आरोहति । ३ वीरः अश्वं आरोहति । ४ दासः गर्दभं आरोहति । ५ शिष्यः अत्र खनति । ६ हे नर ! कथय, तत्र दीपः ज्वलति न वा ? ७ इदानीं कः वृक्षं आरोहति ? ८ त्वं तत् जानासि किं, यत् त्वं पठसि ?

९ बुधः सर्वं जानाति। १० यत्र गृहं अस्ति, तत्र उद्यानं अपि भवति किम् ?

## भाषा-वाक्य।

१ वहां दीप जलता है। २ बंदर वृक्षपर चढता है। ३ चोर घोडेपर चढता है। ४ दास गधेपर चढता है। ५ शिष्य वहां खोदता है। ६ हे मनुष्य! कह, वहां दीप जलता है वा नहीं ? ७ अब कौन वृक्षपर चढता है ? ८ तू जानता है क्या, जो तू पढता है ? ९ ज्ञानी सब जानता है। १० जहां घर होता है, क्या वहां बाग होता है ?

## संस्कृत-वाचन-पाठ।

स यज्ञदत्तः अयोध्यानगरं गच्छति। इदानीं स तत्र किमर्थं गच्छति ? स तत्र किमर्थं गच्छति इति अहं न जानामि। त्वं जानासि किम् ? स उद्यानात् पुष्पं आनयति। इदानीं मध्याह्न-समयः जातः। तर्हि भोजनं कुरु। यदा सायंकालः भविष्यति तदा सायंसंध्यां कुरु। अहं तत्र गमिष्यामि, परंतु भोजनं नैव भक्षयिष्यामि।

## संधि किये हुए वाक्य।

स यज्ञदत्तोऽयोध्यानगरं गच्छति। स तत्र किमर्थं गच्छतीत्यहं न जानामि। स उद्यानात्पुष्पमानयति। इदानीं मध्याह्नसमयो जातः। यथा मनुष्यो गृहेऽन्नं भक्षयति, तथैव वानरो वृक्षस्य फलं वने खादति। यदा यदा त्वमत्रागच्छसि तदा तदाहं पुस्तकं पठामि। वनस्य रक्षको वनपोऽस्ति। द्वारस्य रक्षको द्वारपो भवति। तथैव गृहस्य पालको गृहपो भवति।

# पाठ १२

## संस्कृत वाक्य।

यथा मनुष्यः गृहे अन्नं भक्षयति तथा एव वानरः वृक्षस्य फलं वने खादति। यदा यदा त्वं अत्र आगच्छसि तदा तदा अहं पुस्तकं पठामि। ब्राह्मणाय फलं देहि। क्षत्रियाय शस्त्रं देहि। वैश्याय धनं देहि। शूद्राय अन्नं देहि। वनस्य रक्षकः वनपः अस्ति। द्वारस्य रक्षकः द्वारपः भवति। तथा एव गृहस्य पालकः गृहपः भवति। क्षेत्रस्य पालकः क्षेत्रपः भवति तथैव रथस्य रक्षकः रथपः भवति। मम दासः अन्नं आनय। सः इदानीं तत्र भूमिं खनति। किमर्थं सः तां खनति? जललाभाय खनति।

अब इस पाठमें कुछ श्लोक दिये जाते हैं।

शमीको नाम राजेन्द्र वर्तते विषये तव।
ऋषिः परमधर्मात्मा दान्तः शान्तो महातपाः ॥

( महाभारत आदि ४२।१७ )

पद- शमीक। नाम। राजेंद्र। वर्तते। विषये। तव। ऋषिः। परम-धर्मात्मा। दांत। शांत। महातपाः।

अन्वय — हे राजेंद्र! शमीक नाम परम-धर्मात्मा दांत शांत महातपा ऋषि तव विषये वर्तते।

अर्थ— हे (राजा+इंद्र) राजाओंमें श्रेष्ठ! शमीक नामक बड़ा धर्मात्मा (दांत) इंद्रियदमन करनेवाला, शांत, बड़ा तपस्वी ऋषि तेरे (विषये) राज्यमें (वर्तते) रहता है।

तस्य त्वया नरव्याघ्र सर्पः प्राणैर्वियोजितः।
अवसक्तो धनुष्कोट्या स्कंधे मौनान्वितस्य च।

( महाभारत आदि० ४२।१८ )

पद- तस्य। त्वया। नरव्याघ्र। सर्पः। प्राणैः। वियोजितः। अवसक्तः। धनुष्कोट्या। स्कन्धे। मौनान्वितस्य। च।

अन्वयः— हे नरव्याघ्र! त्वया मौनान्वितस्य तस्य स्कन्धे प्राणैः वियोजितः सर्पः धनुष्कोट्या अवसक्तः।

अर्थ— हे (नर-व्याघ्र) मनुष्योंमें श्रेष्ठ! तूने (मौन+अन्वितस्य) मौनव्रत धारण किये हुए उस ऋषिके (स्कन्धे) कन्धेपर प्राणोंसे (वि-योजितः) वियुक्त अर्थात् मृत सर्पको (धनुष्-कोट्या) धनुष्यकी कोटिसे (अवसक्तः) लपेट दिया।

क्षान्तवांस्तव तत्कर्म पुत्रस्तस्य न चक्षमे।
तेन शप्तोऽसि राजेन्द्र पितुरज्ञातमद्य वै॥

(महाभारत आदि० ४२।१९)

पद- क्षान्तवान्। तव। तत्। कर्म। पुत्रः। तस्य। न। चक्षमे। तेन। शप्तः। असि। राजेन्द्र। पितुः। अज्ञातं। अद्य। वै।

अन्वयः— हे राजेन्द्र! (सः) तव तत् कर्म क्षान्तवान्। तस्य पुत्रः न चक्षमे। तेन अद्य पितुः अज्ञातं वै शप्तः असि।

अर्थ— हे (राजा+इन्द्र) राजाओंमें श्रेष्ठ! उसने तेरा वह कर्म (क्षान्तवान्) सहन किया। परंतु उसके पुत्रने (न चक्षमे) नहीं क्षमा की। उसने आज पिताके (अ-ज्ञातं) न जानते हुए ही (शप्तः असि) तुझे शाप दिया है॥

तव रक्षां कुरुष्वेति पुनः पुनरथाब्रवीत्।
तदन्यथा न शक्यं च कर्तुं केनचिदप्युत॥

पद- तव। रक्षां। कुरुष्व। इति। पुनः। पुनः। अथ। अब्रवीत्। तत्। अन्यथा। न। शक्यं। च। कर्तुं। केन। चित्। अपि। उत॥

अन्वयः— तव रक्षां कुरुष्व इति पुनः पुनः अथ अब्रवीत् उत केन चित् अपि च तत् अन्यथा कर्तुं न शक्यम्॥

अर्थ— ( तत्र ) उस विषयमें रक्षा ( कुरुष्व ) कर ( इति ) ऐसा ( पुनः पुनः ) बार बार ( अथ ) और वह ( अब्रवीत् ) कहने लगा। परंतु किसीसे भी वह ( अन्यथा ) दूसरी प्रकार ( कर्तुं ) करना शक्य नहीं।

नाहि शक्नोति तं यन्तुं पुत्रं कोपसमन्वितम्।
ततोऽहं प्रेषितस्तेन तव राजन्हितार्थिना ॥

(महाभारत आदि ४२।२२)

पद- न। हि। शक्नोति। तं। यन्तुं। पुत्र। कोप-समन्वितं। ततः। अहं। प्रेषितः। तेन। तव। राजन्। हितार्थिना ॥

अन्वयः— हे राजन्! हि कोपसमन्वितं तं पुत्रं यन्तुं न शक्नोति। ततः तव हितार्थिना तेन अहं प्रेषितः।

अर्थ— हे राजन्! क्योंकि ( कोप+समन्वितं ) क्रोधसे युक्त उस पुत्रको ( यन्तुं ) शांत करनेके लिये वह ( न शक्नोति ) समर्थ नहीं है, इसलिये मेरे ( हित-अर्थिना ) हितकी इच्छा करनेवाले उस ऋषिने मुझे ( प्रेषित. ) भेजा है।

## पाठ ९

पूर्व श्लोकोंकी सरल संस्कृत यह है—

हे राजेन्द्र! शमीकः नाम परमधर्मात्मा शान्तः दान्तः महातपाः एकः ऋषिः तव विषये वर्तते। त्वया तस्य मौनव्रतस्य स्कंधे प्राणैः वियुक्तः सर्पः धनुष्कोट्या अवसक्तः। स ऋषिः तव तत् कर्म क्षान्तवान्। परंतु तस्य पुत्रः न चक्षमे। हे राजन्! तेन ऋषिपुत्रेण अद्य पितुः अज्ञातं एव त्वं शप्तः असि। इदानीं तत्र त्वं स्वरक्षां कुरुष्व इति पुनः पुनः त्वां स ऋषिः अब्रवीत्। तत् केन अपि अन्यथा कर्तुं न शक्यं इति च ऋषिः अब्रवीत्।

यदि यह सरल संस्कृत पाठक समझ सकते हैं तो उनकी प्रगति निःसंदेह उतनी हो चुकी है, कि जितनी इतने पाठोंसे होनी चाहिये।

## संधि किये हुए वाक्य।

हे राजेन्द्र! शमीको नाम परमधर्मात्मा शान्तो दान्तो महातपा एक ऋषिस्तव विषये वर्तते। त्वया तस्य मौनव्रतस्य स्कन्धे प्राणैर्वियुक्तः सर्पो धनुष्कोट्याऽवसक्तः। स ऋषिस्तव तत्कर्म क्षान्तवान्। परन्तु तस्य पुत्रो न चक्षमे। राजंस्तेनर्षिपुत्रेणाद्य पितुरज्ञातमेव त्वं शप्तोऽसि। इदानीं त्वं स्वरक्षां कुरुष्वेति पुनः पुनस्त्वां स ऋषिरब्रवीत्। तत्केनाऽप्यन्यथा कर्तुं न शक्यमिति चाप्यब्रवीत्।

निम्नलिखित क्रियाओंको स्मरण कीजिये।

## शब्द।

| | |
|---|---|
| दीपयति = प्रकाश करता है। | वपति = बोता है। |
| ध्यायति = ध्यान करता है। | राजति = प्रकाशता है। |
| वाञ्छति = इच्छा करता है। | रटति = रटता है। |
| वसति = रहता है। | रणति = शब्द करता है। |
| वहति = उठाकर ले जाता है। | भणति = बोलता है। |

निम्नलिखित भविष्यकालकी क्रियाएं अब देखिये—

| | | | |
|---|---|---|---|
| दीपयिष्यति | = प्रकाशित करेगा। | वक्ष्यति | = बोलेगा। |
| ध्यास्यति | = ध्यान करेगा। | राजिष्यति | = प्रकाशित होगा। |
| वाञ्छिष्यति | = इच्छा करेगा। | रटिष्यति | = रटेगा। |
| वत्स्यति | = रहेगा। | रणिष्यति | = बोलेगा। |
| वक्ष्यति | = उठाकर ले जायगा। | भणिष्यति | = बोलेगा। |
| | | करिष्यति | = करेगा। |

पाठक पहिले वर्तमानकालके रूप और ये भविष्यकालके रूप परस्पर तुलना करके देख ले। और इनकी विशेषताका स्मरण रखें। इनके तीनों रूप "ति, सि, मि" लगकर पूर्ववत्‌ही होते हैं। जैसा—

| | |
|---|---|
| रटति = वह रटता है। | भणिष्यति = वह बोलेगा। |
| रटसि = तू रटता है। | भणिष्यसि = तू बोलेगा। |
| रटामि = मैं रटता हूं। | भणिष्यामि = मैं बोलूंगा। |

अब इनके वाक्य देखिये—

१ सः पुरुषः भारं वहति। २ यथा स भारं वहति तथा अहं न वहामि। ३ त्वं इदानीं किं भणसि? ४ स शब्दान् रटति। ५ त्वं किं पठसि? ६ अहं संस्कृतपाठमालां पठामि। ७ दीपं दीपय, तं अत्र आनय च। ८ कृषीवलः बीजं वपति। ९ अहं अपि तथैव बीजं वप्स्यामि। १० यथा त्वं बीजं वपसि तथा स न वपति। ११ रामेश्वरः गृहे वसति। १२ मुनिः वने वसति। १३ यदा अहं तत्र गमिष्यामि तदा त्वं अपि तत्र एवं आगमिष्यसि किं? अथवा त्वं अन्यत्र गमिष्यसि?

## भाषा-वाक्य

१ वह मनुष्य बोझ उठाता है। २ जैसा वह बोझ उठाता है वैसा मैं नहीं उठाता हूं। ३ तू अब क्या बोलता है? ४ वह शब्दोंको रटता है।

५ तू क्या पढता है ? ५ मैं संस्कृत-पाठमाला पढता हूं। ७ दीप जला और उसे यहां ला। ८ किसान बीज बोता है। ९ मैं भी वैसाही बीज बोऊंगा। १० जैसा तू बीज बोता है वैसा वह नहीं बोता। ११ रामेश्वर घरमें रहता है। १२ मुनि वनमें रहता है। १३ जब मैं वहां जाऊंगा तब तुम भी वहां आओगे क्या ? अथवा तुम दूसरे जगह जाओगे ?

---

## पाठ १४

हे मित्र ! त्वं किं वाञ्छसि ? अहं पठितुं इच्छामि । किं अत्रैव पठितुं इच्छसि अथवा काशीक्षेत्रे पठिष्यसि ? अहं व्याकरणशास्त्रं अत्र पठिष्यामि, तथा च न्यायशास्त्रं काशीनगरं गत्वा तत्र कस्य अपि बुधस्य समीपे स्थित्वा पठिष्यामि। यथा राजा स्वनगरे वसति तथैव गृहस्थः स्वगृहे वसति। त्वं स्वगृहे किं न वससि ? अहं स्वगृहे वत्स्यामि। स किं भणति ? यत् स इदानीं भणति, तत् अहं न जानामि। त्वं जानासि किं ? अहं अपि न जानामि। कः इदानीं ईश्वरं ध्यायति ? अहं एकाग्रेण मनसा ईश्वरं ध्यायामि। तदा त्वं किं करोषि ? अहं अपि तथैव ब्राह्मणं ध्यायामि। यदि त्वं परमेश्वरं ध्यास्यसि, तर्हि शोभनं भविष्यति। स किमपि नैव वाञ्छिष्यति। यदा स तत्र गमिष्यति, तदा क्षेत्रे बीजं वप्स्यति। यदि न गमिष्यति, तर्हि कथं बीजं वप्स्यति ?

### शब्द ।

| | |
|---|---|
| संगमः = संयोग | विहगः = पक्षी |
| संगः = मिलाप | विहंगमः = पक्षी |
| योध = वीर | खगः = पक्षी |
| कासारः = तालाव | भृत्यः = नौकर |
| संमानः = मान | सेवकः = नौकर |

## संस्कृत-वाक्य ।

१ योधः अद्य युद्धं प्रति गमिष्यति । २ तस्य भृत्यः इदानीं किं भणति ? ३ पश्य, खगः कथं आकाशे गच्छति ? ४ कासारे जलं वर्तते । ५ जले सेवकः पतति । ६ ब्राह्मणः संमानं न इच्छति । ७ क्षत्रियः संमानं वाञ्छति । ८ वैश्यः वाणिज्येन धन इच्छति । ९ तव भृत्यः कर्मकुशलः अस्ति ।

## भाषा-वाक्य ।

१ वीर आज युद्धके प्रति जायगा । २ इनका नौकर अब क्या बोलता है ? ३ देख, पक्षी कैसा आकाशमें जाता है । ४ तालावमें जल है । ५ जलमें नौकर गिरता है । ६ ब्राह्मण संमान नहीं चाहता है । ७ क्षत्रिय संमान चाहता है । ८ वैश्य वाणिज्यसे धन चाहता है । ९ तेरा नौकर कर्ममें कुशल है ।

निम्नलिखित वाक्य अब पढिये । पढतेही आपकी समझमें आ जावेंगे---

## संस्कृत-वाचन-पाठः ।

स योधः इदानीं किं करोति ? स वीरः पुरुषः इदानीं युद्धाय गन्तुं इच्छति । तस्य शस्त्रं त्वया कुत्र रक्षितं अस्ति ? मया तस्य शस्त्र न कुत्रापि रक्षितम् । यज्ञदत्तस्य पुस्तकं तव भृत्येन कुत्र नीतम् ? अहं न जानामि तत् । तव भृत्यं अत्र आनय । मम भृत्यः जलार्थं कूपं प्रति गतः । स इदानीं एव अत्र आगमिष्यति । यः शास्त्रं जानाति, स एव पण्डितः । यः शास्त्रं न जानाति, स पंडितः कथं भवति ? यदि त्वं गन्तुं इच्छसि, तर्हि अधुना एव गच्छ । स राजा सेवकैः सह अत्र एव इदानीं आगच्छति । अहं आकाशे खग पश्यामि । यः जनः जले स्नानं करोति, स कः अस्ति ? यः मनुष्यः तस्मिन् जले इदानीं स्नानं करोति, सः महापण्डितः भट्टभास्करः अस्ति ॥

अब निम्नलिखित शब्द स्मरण कीजिये—

| | | | |
|---|---|---|---|
| गुणः | = गुण, रस्सी | समागमः | = संगति |
| कामः | = इच्छा | पर्वतः | = पहाड़ |
| विनयः | = विनय | मनोरथः | = मनकी इच्छा |
| लोभः | = लोभ | ज्वरः | = ज्वर, बुखार |
| धूमः | = धूवाँ | उपायः | = उपाय, इलाज |

## संस्कृत वाक्य।

१ स गुणेन बद्धः। २ तव कः कामः अस्ति इदानीम्? ३ यत्र यत्र धूमः तत्र तत्र वह्निः अस्ति। ४ स पर्वतः तत्र अस्ति। ५ तस्मिन् पर्वते शोभनं वनं अस्ति। ६ प्रतिदिनं अहं तत्र गच्छामि, ईश्वरं ध्यायामि च। ७ यत्र कामः अस्ति तत्र लोभः अपि भवति। ८ ईश्वरस्य ध्यानं एव तत्र उपायः। ९ त्वं ईश्वरस्य ध्यानं कुरु।

## भाषा-वाक्य।

१ वह रस्सीसे बंधा हुआ है। २ तेरी कौनसी इच्छा है अब? ३ जहां जहां धूवां है, वहां वहां अग्नि है। ४ वह पहाड़ वहां है। ५ उस पर्वतपर उत्तम वन है। ६ प्रतिदिन मैं वहां जाता हूं, और ईश्वरका ध्यान करता हूं। ७ जहां काम होता है, वहां लोभ भी होता है। ८ ईश्वरका ध्यानही वहां उपाय है। ९ तू ईश्वरका ध्यान कर।

## शब्द।

| | | | |
|---|---|---|---|
| उक्तं | = कहा हुआ | स्थितं | = ठहरा हुआ |
| पठितं | = पढ़ा हुआ | प्राप्तं | = प्राप्त किया हुआ |
| दृष्टं | = देखा हुआ | कृतं | = किया हुआ |
| खादितं | = खाया हुआ | नीतं | = लिया हुआ |
| गतं | = गया हुआ | दंडितं | = दंड किया हुआ |

| | |
|---|---|
| आगतं = आया हुआ | धावितं = दौड़ा हुआ |
| भूतं = हुआ हुआ | दत्तं = दिया हुआ |
| पतितं = गिरा हुआ | भ्रामितं = घुमाया हुआ |
| लिखितं = लिखा हुआ | उपविष्टं = बैठा हुआ |
| पक्वं = पकाया हुआ | नष्ट = नष्ट हुआ हुआ |

## संस्कृत-वाक्य ।

१ त्वया किं उक्तम् ? २ मया पुस्तकं पठितम् । ३ तेन पुष्पं दृष्टम् । ४ मया कर्म न कृतम् । ५ तव पत्रं मया अद्य एव प्राप्तम् । ६ तव वस्त्रं मया न नीतम् । ७ यथा त्वया लिखितं तथा एव मया पठितम् ।

## भाषा-वाक्य ।

१ तूने क्या कहा ? २ मैंने पुस्तक पढ़ी । ३ उसने फूल देखा । ४ मैंने कर्म नहीं किया । ५ तेरा पत्र मैंने आज ही प्राप्त किया । ६ तेरा वस्त्र मैंने नहीं लिया । ७ जैसा तूने लिखा, वैसा मैंने पढ़ा ।

## संधि किये हुए वाक्य ।

तव कः कामोऽस्तीदानीम् ? यत्र यत्र धूमस्तत्र तत्र वह्निरस्ति । स पर्वतस्तत्रास्ति । यत्र कामोऽस्ति तत्र लोभोऽपि भवति । ईश्वरस्य ध्यानमेव तत्रोपायः । त्वया किमुक्तम् ? तव पत्रं मयाद्यैव प्राप्तम् ।

## संस्कृत वाक्य ।

१ त्वया पाठः पठितः । २ तेन पुस्तकः पठितम् । ३ मया अष्टाध्यायी पठिता ।

## भाषा वाक्य ।

१ तूने पाठ पढ़ा है । २ उसने पुस्तक पढ़ी है । ३ मैंने अष्टाध्यायी पढ़ी है ।

यहां "पठित" यह शब्द तीनों लिंगोंमें शब्दोंके साथ इस प्रकार बदलता है। इसी रीतिसे शब्दोंके लिंगोंके अनुसार उनके रूप बदलकर निम्नलिखित वाक्य बनते हैं—

संस्कृत वाक्य।

१ तेन मंत्रः उक्तः। २ त्वया कविता उक्ता। ३ मया काव्यं उक्तम्। ४ त्वया मोदकः खादितः। ५ मया करपट्टिका खादिता।

भाषा वाक्य।

१ उसने मंत्र कहा। २ तूने कविता कही। ३ मैंने काव्य कहा। ४ तूने लड्डू खाया। ५ मैंने फुलका खाया।

---

## पाठ १५

संस्कृत वाक्य।

१ तेन अन्नं खादितम्। २ रामः तत्र गतः। ३ सीता अत्र आगता। ४ जलं तत्र गतम्। ५ मया धनं प्राप्तम्। ६ त्वया अश्वः प्राप्तः। ७ तेन मुद्रिका प्राप्ता। ८ मया जलं तत्र न नीतम्। ९ त्वया सेवकः किं न नीतः? १० तेन तत्र गौः नीता। ११ स पुरुषः कर्दमे पतितः। १२ सा स्त्री जले पतिता। १३ मम पत्रं कूपे पतितम्। १४ रामचन्द्रेण पत्रं लिखितम्। १५ नलेन पत्रिका लिखिता। १६ मया लेखः लिखितः। १७ त्वया धनं न दत्तम्। १८ तेन भूमिः दत्ता। १९ मया ग्रन्थः दत्तः। २० तव पातकं नष्टम्। २१ मम स्मृतिः न नष्टा। २२ तस्य ग्रंथः नष्टः किम्?

भाषा वाक्य।

१ उसने अन्न खाया। २ राम वहां गया। ३ सीता यहां आगई। ४ जल वहां गया। ५ मैंने धन प्राप्त किया। ६ तूने घोडा प्राप्त किया। ७ उसने

अंगुठी प्राप्त की। ८ मैंने जल वहां नहीं लिया। ९ तूने सेवक क्यों नहीं लिया? १० उसने वहां गाय ली है। ११ वह पुरुष कीचडमें गिरा। १२ वह स्त्री जलमें गिर गई। १३ मेरा पुत्र कुंएमें गिर गया। १४ रामचंद्रने पत्र लिखा। १५ नलने पत्र लिखा। १६ मैंने लेख लिखा। १७ तूने धन नहीं दिया। १८ उसने भूमि दी। १९ मैंने ग्रन्थ दिया। २० तेरा पाप नष्ट हुआ। २१ मेरी स्मरणशक्ति नष्ट नहीं हुई। २२ उसका ग्रंथ नष्ट हो गया क्या?

इसी प्रकार अन्यान्य शब्दोंका प्रयोग करके वाक्य बना सकते हैं।

## शब्द।

| | |
|---|---|
| पीत = पीया हुआ | भुक्त = भोजन किया हुआ |
| भक्षित = खाया हुआ | श्रुत = सुना हुआ |
| ज्ञात = जाना हुआ | कथित = कहा हुआ |
| आज्ञात = आज्ञा किया हुआ | आरूढ = चढा हुआ |
| धृत = धारण किया हुआ | व्याख्यात = व्याख्यान दिया हुआ |
| आघ्रात = सूंघा हुआ | रक्षित = रखा हुआ |
| पालित = पाला हुआ | |

## संस्कृत-वाक्य।

१ किं त्वया जलं पीतम्? २ मया अन्नं भक्षितं जलं च पीतम्। ३ यत् त्वया उक्तं तत् सर्वं मया ज्ञातम्। ४ किं त्वया भुक्तं अन्नम्? ५ तेन एषः विषयः व्याख्यातः। ६ तेन भोजनपात्रं कुत्र रक्षितम्?

## भाषा वाक्य।

१ क्या तूने जल पीया? २ मैंने अन्न खाया और जल पीया। ३ जो तूने कहा वह सब मैंने जान लिया। ४ क्या तूने अन्न खाया? ५ उसने इस विषयका व्याख्यान किया। ६ उसने भोजनका पात्र कहां रखा?

## संस्कृत-वाचन-पाठः ।

तव पात्रं जले पतितम् । यदा तत् जले पतितं तदा एव मया दृष्टम् । यदि त्वया अन्नं न भक्षितं, तर्हि अत्र आगच्छ, अहं तुभ्यं अन्नं दास्यामि । तेन यदि चक्रं न भ्रामितं, तर्हि यन्त्रं कथं भ्रमति ? यदि तेन जलं न दत्तं, तर्हि त्वया कथं प्राप्तम् ? त्वं तत्र उपविष्टः असि, तथैव सः अपि उपविष्टः अस्ति । नृपेण स कथं दण्डितः ? तेन किं कृतम् ? यत् त्वया श्रुतं तत् एव इदानीं वद । तेन ईश्वरेण सर्वं जगत् बलेन कृतं अस्ति । यत् मया इदानीं व्याख्यातं तत् त्वया ज्ञातं किम् ? वीरस्य शस्त्रं मया अत्रैव रक्षितं, परंतु तत् इदानीं अत्र नास्ति, केन नीतं इति अहं न जानामि । यः यथा कर्म करोति, सः तथा एव फलं प्राप्नोति ।

## संधि किये हुए वाक्य ।

यदि त्वयान्नं न भक्षितं तर्ह्यत्रागच्छ, अहं तुभ्यमन्नं दास्यामि । त्वं तत्रोपविष्टोऽसि तथैव सोऽप्युपविष्टोऽस्ति । नृपेण स कथं दण्डितः ? तेन किं कृतम् ? यत्त्वया श्रुतं तदेवेदानीं वद । तेनेश्वरेण सर्वं जगद्बलेन कृतमस्ति । यन्मयेदानीं व्याख्यातं तत्त्वया ज्ञातं किम् ? वीरस्य शस्त्रं मयात्रैव रक्षितः परंतु तदिदानीमत्र नास्ति, केन नीतमित्यहं न जानामि ।



## पाठ १६

निम्नलिखित शब्द स्मरण कीजिये—

### शब्द ।

| | | | |
|---|---|---|---|
| पादः | = पांव | दिवसः | = दिन |
| प्रयत्नः | = प्रयत्न | विप्रः | = ज्ञानी, ब्राह्मण |

| | | | |
|---|---|---|---|
| स्वर्गः | = स्वर्ग | अस्ताचलः | = सूर्यास्त होनेका पर्वत |
| अपवर्गः | = स्वर्ग | मृगः | = हरिण |
| समाजः | = समाज | पान्थः | = प्रवासी |
| अर्थः | = धन | | |

## संस्कृत वाक्य।

१ तेन कुमारेण इदानीं किं उक्तम्? २ तस्मिन् समाजे एकः पण्डितः अस्ति। ३ तस्मिन् मम कः अपराधः? ४ पुरुष अर्थस्य दासः। ५ पान्थः मार्गेण गच्छति। ६ अस्ताचलं सूर्यः गच्छति

## भाषा-वाक्य।

१ उस लड़केने अब क्या कहा? २ उस समाजमें एक पण्डित है। ३ उसमें मेरा क्या अपराध है? ४ मनुष्य धनका दास है। ५ प्रवासी मार्गसे जाता है। ६ अस्तपर्वतके प्रति सूर्य जाता है।

## शब्द।

| | | | |
|---|---|---|---|
| दैत्यः | = राक्षस | सर्पः | = सांप |
| पाठः | = पाठ | स्वरः | = स्वर, आवाज |
| आचार्यः | = आचार्य | वासः | = निवास |

सर्वभूतानां हृद्देशे तिष्ठति। सर्वं जगत् स एव भ्रामयति। तं शरणं गच्छामि। तस्य प्रसादात् त्वं परां शान्तिं प्राप्स्यसि। अहं मरणात् भीतः न अस्मि। सत्यस्य वचनं एव सदा श्रेयः भवति। यः सदा असत्यं वदति स एव पतति। त्वं कदा अपि असत्यं मा वद।

## संस्कृत वाक्य।

१ तेन लेखः लिखितः किम्? २ यः लेखः तेन लिखितः तं त्वं पठ। ३ तव पुत्रः इदानीं किं पठति? ४ त्वं हस्ते दण्डं धारय। ५ तस्मिन् मार्गे सर्पः स्थितः। ६ त्वया वेदस्य पुस्तकं कुत्र रक्षितम्? ७ तव कुत्र वासः भवति? ८ चोरः केन मार्गेण गतः?

## भाषा वाक्य।

१ उसने लेख लिखा क्या? २ जो लेख उसने लिखा है उसको तू पढ। ३ तेरा पुत्र अब क्या पढता है? ४ तू हाथमें दण्ड धारण कर। ५ उस मार्गमें सांप है। ६। तूने वेदकी पुस्तक कहां रखी है? ७ तेरा कहां निवास है? ८ चोर किस मार्गसे गया?



# पाठ १७

## संस्कृत-वाचन-पाठः।

हे आचार्य! अहं न्यायशास्त्रं पठितुं इच्छामि। हे शिष्य! किं त्वया व्याकरणशास्त्रं पठितम्? यदि नहि पठितं, तर्हि प्रथमं व्याकरणशास्त्रं एव पठ। पश्चात् न्यायशास्त्रं पठिष्यसि।

तस्य महान् शब्दः अस्ति। तं पृच्छ, कुत्र गच्छसि इति। स वदति, अहं प्रभासनगरं अधुना गच्छामि इति। तस्मात् नगरात् स कदा पुनः आगमिष्यति?

तव पुत्रेण मम दण्डः कुत्र नीतः ? स मम पुत्रः तव दण्डेन सह तत्र धावति। तं पश्य, स कथं धावति इति। यदा स धावति तदा त्वां पश्यति।

मम वस्त्रं कुत्र अस्ति ? तत् सर्वं चोरेण नीतम्। पात्रं अपि नास्ति। तत् अपि तेन एव नीतम्। स चोरः केन मार्गेण गतः इति त्वं जानासि किम् ?

संधि किये हुए वाक्य।

तेन लेखो लिखितः किम् ? यो लेखस्तेन लिखितस्तं त्वं पठ। तव पुत्र इदानीं किं पठति ? तव कुत्र वासो भवति ? हे आचार्य। अहं न्यायशास्त्रं पठितुमिच्छामि। हे शिष्य ! किं त्वया व्याकरणशास्त्रं पठितम् ? यदि नहि पठितं, तर्हि प्रथमं व्याकरणशास्त्रमेव पठ। पश्चान्न्यायशास्त्रं पठिष्यसि। तत्र महाञ्छब्दोऽस्ति। तं पृच्छ, कुत्र गच्छसीति। स वदत्यहं प्रभासनगरमधुना गच्छामीति। तस्मान्नगरात्स कदा पुनरागमिष्यति ?

कुत्र नीतस्तव पुत्रेण मम दण्डः ? स मम पुत्रस्तव दण्डेन सह तत्र धावतीति। पश्य तं स कथं धावति ?

मम वस्त्रं कुत्राऽस्ति ? तत्सर्वं चोरेण नीतम्। पात्रमपि नास्ति। तदपि तेनैव नीतम्। स चोरः केन मार्गेण गत इति त्वं जानासि किम्।

इस पाठमें निम्नलिखित श्लोक आप पढ़िये—

नमः शिवाय शान्ताय निश्चलाय यशस्विने।
जगद्बीजाय श्रेष्ठाय तस्मै धीरात्मने नमः ॥ १ ॥

पद— नमः। शिवाय। शान्ताय। निश्चलाय। यशस्विने। जगत्+बीजाय। श्रेष्ठाय। तस्मै। धीर+आत्मने। नमः ॥

अर्थ- ( शिवाय ) कल्याणमय, ( शान्ताय ) शांत, निश्चल,

( यशस्विने ) यशस्वी, ( श्रेष्ठाय ) श्रेष्ठ, ( वीर्य+आत्मने ) वीर्यमय आत्मारूप ( तस्मै ) उस ( जगत्+बीजाय ) जगत्के बीजभूत ईश्वरके लिये नमस्कार है।

सर्वेऽपि सुखिनः सन्तु सर्वे सन्तु निरामयाः।
सर्वे भद्राणि पश्यन्तु न कश्चिद् दुःखमाप्नुयात् ॥

पद- सर्वे। अपि। सुखिनः। सन्तु। सर्वे। सन्तु। निरामयाः। सर्वे। भद्राणि। पश्यन्तु। न। कः। चित्। दुःखं। आप्नुयात् ॥

अन्वयः- सर्वे अपि सुखिनः सन्तु। सर्वे निरामयाः सन्तु। सर्वे भद्राणि पश्यन्तु। कश्चित् दुःखं न आप्नुयात् ॥

अर्थ— ( सर्वे ) सब ( अपि ) ही ( सुखिनः ) सुखी ( सन्तु ) हों। सब ( निरामयाः ) रोगरहित हों; सब ( भद्राणि ) कल्याणोंको ( पश्यन्तु ) देखें और ( कः चित् ) कोई भी दुःखको ( न आप्नुयात् ) प्राप्त न होवे।

न तपस्तप इत्याहुर्ब्रह्मचर्यं तपोत्तमम्।
ऊर्ध्वरेता भवेद्यस्तु स देवो न तु मानुषः ॥

पद- न। तपः। तपः। इति। आहुः। ब्रह्म—चर्यं। तप+उत्तमम्। ऊर्ध्व+रेताः। भवेत्। यः। तु। सः। देवः। न। तु। मानुषः ॥

अन्वयः- तपः तपः इति न आहुः। ब्रह्मचर्यं तपोत्तमम्। यः तु ऊर्ध्वरेताः भवेत्, सः देवः, न तु मानुषः ॥

अर्थ- तपको तप ऐसा नहीं कहते। ब्रह्मचर्य ही ( तप+उत्तम ) उत्तम तप है। जो ( तु ) निश्चयसे ऊर्ध्वरेता होता है, वह देव है, वह मनुष्य नहीं है।

आजन्ममरणाद्यस्तु ब्रह्मचारी भवेदिह।
न तस्य किञ्चिदप्राप्यं इति विद्धि नराधिप ॥
( महाभारत अनु० ६५।३५ )

पद— आ+जन्म+मरणात् । यः । तु । ब्रह्मचारी । भवेत् । इह । न । तस्य । किंचित् । अप्राप्यं । इति । विद्धि । नराधिप ।

अन्वयः— हे नराधिप ! यः तु आजन्ममरणात् ब्रह्मचारी इह भवेत् । तस्य किञ्चित् अप्राप्यं न इति विद्धि ॥

अर्थ— हे ( नर+अधिप ) मनुष्योंके प्रभु ! जो ( तु ) निःसंदेह जन्मसे मरणपर्यन्त ब्रह्मचारी ( इह ) इस जगतमें ( भवेत् ) होवे, ( तस्य ) उसके लिए ( किंचित् ) कुछ भी ( अप्राप्यं ) प्राप्त होने अयोग्य नहीं, ऐसा ( विद्धि ) तू जान ।

पञ्चविंशतिपर्यंतं ब्रह्मचर्यं समाचरेत् ।
गुणवाञ्छक्तिसंपन्नः शतायुस्तु भविष्यति ॥

पद— पंचविंशतिपर्यंतं । ब्रह्मचर्यं । समाचरेत् । गुणवान् शक्तिसंपन्नः । शतायुः । तु । भविष्यति ॥

अर्थ— ( पंच+विंशति+पर्यंतं ) पचीस पर्यंतक ब्रह्मचर्य ( समाचरेत् ) जो आचरण करेगा, वह गुणवान्, शक्तिसंपन्न और शतायु ( तु ) निःसंदेह ( भविष्यति ) होगा ।

---

## पाठ १८

कायेन मनसा वाचा सर्वावस्थासु सर्वदा ।
सर्वत्र मैथुनत्यागो ब्रह्मचर्यं विधीयते ॥

पद— कायेन । मनसा । वाचा । सर्व+अवस्थासु । सर्वदा । सर्वत्र । मैथुन त्यागः । ब्रह्मचर्यं । विधीयते ॥

अर्थ– ( कायेन ) शरीरसे, ( मनसा ) मनसे, ( वाचा ) वाणीसे, ( सर्व+अवस्थासु ) सब अवस्थाओंमें सर्वदा और सर्वत्र मैथुनका त्याग करना ब्रह्मचर्य ( विधीयते ) कहा जाता है।

यदीच्छसि वशीकर्तुं जगदेकेन कर्मणा।
सुदुर्वृत्तेन्द्रियग्रामं बलाच्छीघ्रं निवारय॥

पद– यदि। इच्छसि। वशीकर्तुं। जगत्। एकेन। कर्मणा। सु+दुर्+वृत्त+इंद्रिय+ग्रामं। बलात्। शीघ्रं। निवारय॥

अन्वयः— यदि एकेन कर्मणा जगत् वशीकर्तुं इच्छसि, सुदुर्वृत्त+इंद्रिय+ग्रामं शीघ्रं बलात् निवारय॥

अर्थ— यदि एक कर्मसे सब जगत् वशमें करनेकी इच्छा तू करता है, तो दुष्ट आचरण करनेवाले इंद्रियोंके समुदायको शीघ्रही बलके साथ ( निवारय ) निवारण कर।

इन श्लोकोंको वारंवार पढके देखिये कि आपकी योग्यता कितनी हुई है और संस्कृतमें कैसी प्रगति आप कर रहे हैं।

## संधि किये हुए वाक्य।

तव पात्रं जले पतितम्। यदा तज्जले पतितं तदैव मया दृष्टम्। यदि त्वयान्नं न भक्षितं तर्ह्यग्रागच्छाहं तुभ्यमन्नं दास्यामि। तेन यदि चक्रं न भ्रामितं, तर्हि यन्त्रं कथं भ्रमति? यदि तेन जलं न दत्तं, तर्हि त्वया कथं प्राप्तम्? त्वं यथा तत्रोपविष्टोऽसि तथैव सोऽप्युपविष्टोऽस्ति, नृपेण स कथं दण्डितः? किं तेन कृतम्? यत्त्वया श्रुतं तदेवेदानीं वद। तेनेश्वरेण सर्वं जगद्बलेन धृतमस्ति। यन्मयेदानीं व्याख्यातं तत्त्वया ज्ञातं किम्? चौरस्य शस्त्रं मयात्रैव रक्षितं, परन्तु तदिदानीमत्र नास्ति, केन नीतमित्यहं न जानामि। यो यथा करोति स तथैव फलं प्राप्नोति।

## संस्कृत-वाचन-पाठः ।

( १ )

हे राजेन्द्र! शमीको नाम परमधर्मात्मा शान्तो दान्तो महातपा एक ऋषिस्तव विषये वर्तते। त्वया मौनव्रतस्य तस्य स्कंधे प्राणैर्वियुक्त सर्पो धनुष्कोट्याऽवसक्तः। स ऋषिस्तव तत्कर्म क्षान्तवान्। परन्तु तस्य पुत्रो न चक्षमे। हे राजन्! तेनर्षिपुत्रेणाद्य पितुरज्ञातमेव त्वं शप्तोऽसि। इदानीं तत्र त्व स्वरक्षां कुरुष्वेति पुनःपुनस्त्वां स ऋषिरब्रवीत्। तत्केनाप्यन्यथाकर्तुं न शक्यमिति चापि सोऽब्रवीत्।

( २ )

स पुरुषो भारं वहति। यथा स भार वहति तथाऽहं न वहामि। त्वमिदानीं किं भणसि। स शब्दान् रटति। दीपं दीपय, तमआनय च। कृषीवलो बीज वपति। अहमपि तथैव बीजं वप्स्यामि। यथा त्व बीज वपसि तथा स न वपति। रामेश्वरो गृहे वसति। मुनिर्वने वसति।

( ३ )

हे मित्र, त्व किं वाञ्छसि? अहं पठितुमिच्छामि। किमत्रैव पठितुमिच्छसि? अथवा काशीक्षेत्रे पठिष्यसि? अहं व्याकरणशास्त्रमत्र पठिष्यामि, तथा च न्यायशास्त्र काशीनगरं गत्वा, तत्र कस्यापि बुधस्य समीप स्थित्वा पठिष्यामि। यथा राजा स्वनगरे वसति, तथैव गृहस्थः स्वगृहे वसति। त्व स्वगृहे किं न वससि? अहं स्वगृहे वत्स्यामि। स किं भणति? वत्स इदानीं भणति, तदहं न जानामि। त्व जानासि किम्? अहमपि न जानामि। क इदानीमीश्वरं ध्यायति? अहमेकाग्रेण मनसेश्वर ध्यायामि। यदि त्वं परमेश्वर ध्यास्यसि, तर्हि शोभन भविष्यति। स

किमपि नैव वाञ्छिष्यति। यदा स तत्र गमिष्यति तदा क्षेत्रे बीजं वप्स्यति।

(४)

योधोऽद्य युद्धं प्रति गमिष्यति। तस्य भृत्य इदानीं किं भणति? पश्य, खगः कथमाकाशे गच्छति। कासारे जलं वर्तते। जले सेवकः पतति। ब्राह्मणः संमानं नेच्छति। क्षत्रियः संमानं वाञ्छति। वैश्यो वाणिज्येन धनमिच्छति। तव भृत्यः कर्मकुशलोऽस्ति।



## पाठ १९

### संस्कृत-वाचन-पाठः।

स योध इदानीं किं करोति। स वीरः पुरुष इदानीं युद्धाय गन्तुमिच्छति। तस्य शास्त्रं त्वया कुत्र रक्षितमस्ति? मया तस्य शास्त्रं न कुत्रापि रक्षितम्। यज्ञदत्तस्य पुस्तकं तव भृत्येन कुत्र नीतम्? अहं न जानामि तत्। तव भृत्यमत्रानय। मम भृत्यो जलार्थं कूपं प्रति गतः। स इदानीमेवात्रागमिष्यति। यः शास्त्रं जानाति स एव पण्डितः। यः शास्त्रं न जानाति स पंडितः कथं भवति? यदि त्वं तत्र गन्तुमिच्छसि। तर्ह्यधुनैव गच्छ। स राजा सेवकैः सहात्रेदानीमागच्छति। अहमाकाशे तं खगं पश्यामि। यो जनो जले स्नानं करोति स कोऽस्ति? यो मनुष्यस्तस्मिञ्जले इदानीं स्नानं करोति, स महापण्डितो भट्टभास्करोऽस्ति।

स गुणेन बद्धः। तव कः कामोऽस्तीदानीम्? यत्र यत्र धूमस्तत्र तत्र वह्निरस्ति। स पर्वतस्तत्राऽस्ति। तस्मिन्पर्वते शोभनं वनमस्ति। प्रतिदिनमहं तत्र गच्छामीश्वरं ध्यायामि च। यत्र कामोऽस्ति तत्र लोभोऽपि भवति। ईश्वरस्य ध्यानमेव तत्रोपायः।

त्वया किमुक्तम् ? मया पुस्तकं पठितम् । तेन पुष्पं दृष्टम् । मया कर्म न कृतम् । तव पत्रं मयाद्यैव प्राप्तम् तव वस्त्रं मया नीतम् । यथा त्वया लिखितं तथैव मया पठितम् ।

त्वया पाठः पठितः । तेन पुस्तकं पठितम् । मयाऽष्टाध्यायी पठिता । तेन मंत्रः उक्तः । त्वया कवितोक्ता । मया काव्यमुक्तम् । त्वया मोदकः खादितः । मया करपट्टिका खादिता । तेनान्नं खादितम् । रामस्तत्र गतः । सीतात्रागता । जलं तत्र गतम् । मया धनं प्राप्तम् । त्वयाऽश्वः प्राप्तः । तेन मुद्रिका प्राप्ता । मया जलं तत्र न नीतम् । त्वया सेवकः किं न नीतः ? तेन तत्र गौर्नीता । स पुरुषः कर्दमे पतितः । सा स्त्री जले पतिता । मम पत्रं कूपे पतितम् । रामचन्द्रेण पत्रं लिखितम् । नलेन पत्रिका लिखिता । मया लेखो लिखितः । त्वया धनं दत्तम् । तेन भूमिर्दत्ता । मया ग्रंथो दत्तः । तव पातकं नष्टम् । मम स्मृतिर्न नष्टा । तस्य ग्रंथो नष्टः किम् ?

किं त्वया जलं पीतम् ? मयान्नं भक्षितं जलं च पीतम् । यत्त्वयोक्तं तत्सर्वं मया ज्ञातम् । किं त्वया भुक्तमन्नम् ? तेनैव विषयो व्याख्यातः । तेन भोजनपात्रं कुत्र रक्षितम् ?

किं त्वया पाठो न पठितः ? त्वया पुस्तकं न पठितं किम् ? त्वया अष्टाध्यायी नैव पठिता । मया मन्त्रः पठित एव । केन कविता नैवोक्ता । त्वया काव्यमुक्तं किम् ? खादितोऽपि मया मोदकः । त्वया करपट्टिका खादिता किम् ? मयान्नं खादितमेव । रामस्तत्र गतः किम् ?

सीतात्र नैवागता । जलं तत्र गतं नैव । मया धनं प्राप्तम् । अश्वस्त्वया प्राप्तः किम् ? मया मुद्रिका प्राप्ता । मया जलं तत्रैव नीतम् ।

परमधर्मात्मा शमीको नाम मुनिः तव राज्ये तपः तपति । त्वया मौनावलम्बिनः प्रतस्थस्य तस्य मुनेः कण्ठे एकः मृतः

सर्पो धनुष्कोट्याऽवसक्तः । स शान्तो दान्तो मुनिः तत्तव दुष्टं कृत्यं क्षान्तवान् । परंतु तस्य मुनेः पुत्रः तत्तव कर्म न चक्षमे। हे राजन्! शमीकस्य तेन पुत्रेण त्वं शप्तोऽसि । अतः इदानीं तत्र त्वं संरक्षां कुरुष इति पुनः पुनः स ऋषिः त्वां अब्रवीत्।

---

## पाठ २१

इदं तु ते गुह्यतमं प्रवक्ष्याम्यनसूयवे ।
ज्ञानं विज्ञानसहितं यज्ज्ञात्वा मोक्ष्यसेऽशुभात् ॥ १ ॥

पद— इदं । तु । ते । गुह्य-तमं । प्रवक्ष्यामि । अनसूयवे । ज्ञानं । विज्ञान-सहितं । यत् । ज्ञात्वा । मोक्ष्यसे । अशुभात् ।

*अन्वयः— यत् ज्ञात्वा ( त्वं ) अशुभात् मोक्ष्यसे, ( तत् ) तु इदं गुह्यतमं विज्ञानसहितं ज्ञानं अनसूयवे ते प्रवक्ष्यामि ॥*

अर्थ— जो जानकर ( तुम ) अशुभसे मुक्ति पाओगे ( वह ) यह अत्यन्त गुह्य और विज्ञानसहित तथा मत्सररहित उत्तम ज्ञान तुमको मैं कहनेवाला हूँ ।

राजविद्या राजगुह्यं पवित्रमिदमुत्तमम् ।
प्रत्यक्षावगमं धर्म्यं सुसुखं कर्तुमव्ययम् ॥ २ ॥

पद— राज-विद्या । राज-गुह्यं । पवित्रं । इदं । उत्तमं । प्रत्यक्ष-अवगमं । धर्म्यं । सुसुखं । कर्तुं । अव्ययम् ।

अन्वयः— इदं ( ज्ञानं ) राजविद्या, राजगुह्यं, उत्तमं, पवित्रं, अव्ययं, प्रत्यक्षावगमं, कर्तुं सुसुखं, धर्म्यं च ( अस्ति ) ।

अर्थ— यह ज्ञान अर्थात् सब विद्याओंमें मुख्य, सब गुह्योंमें गुह्य, उत्तम, पवित्र, अविनाशी, प्रत्यक्ष अनुभवमें आनेवाला, करनेमें सुलभ और धार्मिक स्वरूपका ऐसा है ।

अश्रद्दधानाः पुरुषा धर्मस्यास्य परंतप ।
अप्राप्य मां निवर्तन्ते मृत्युसंसारवर्त्मनि ॥ ३ ॥

पद— अश्रद्दधानाः । पुरुषाः । धर्मस्य । अस्य । परंतप । अप्राप्य । मां । निवर्तन्ते । मृत्यु-संसार-वर्त्मनि ।

अन्वयः— हे परंतप ! अस्य धर्मस्य अश्रद्दधानाः पुरुषाः मां अप्राप्य मृत्युसंसारवर्त्मनि निवर्तन्ते ।

अर्थ— हे श्रेष्ठ तप करनेवाले अर्जुन ! इस धर्मपर श्रद्धा न रखनेवाले लोग मुझको ( ईश्वरको ) नहीं प्राप्त होते हैं । मृत्युमय संसारके मार्गोंपर बारंबार भटकते रहते हैं ।

मया ततमिदं सर्वं जगदव्यक्तमूर्तिना ।
मत्स्थानि सर्वभूतानि न चाहं तेष्ववस्थितः ॥ ४ ॥

पद— मया । ततं । इदं । सर्वं । जगत् । अव्यक्तमूर्तिना । मत्स्थानि । सर्व-भूतानि । न । च । अहं । तेषु । अवस्थितः ।

अन्वयः— अव्यक्तमूर्तिना मया इदं सर्वं जगत् ततम् । सर्वे भूतानि मत्स्थानि ( सन्ति ), अहं च तेषु न अवस्थितः ।

अर्थ— अव्यक्त मूर्ति धारण करनेवाले मेरेसे ( ईश्वरसे ) यह सम्पूर्ण संसार विस्तृत अथवा व्याप्त किया गया है । सब प्राणी मेरेमें हैं किन्तु हम उनमें नहीं हैं ।

गुह्यतमं— अत्यन्तं गुह्यं गुह्यतमं ।
अनसूयुः— न असूयुः अनसूयुः ।
विज्ञानसहितं— विशेष ज्ञानं विज्ञानं । विज्ञानेन सहितं विज्ञान सहितम् ।
अशुभं— न शुभं अशुभम् ।
अव्ययः— न व्ययः अव्ययः ।
अव्यक्तमूर्तिः— अव्यक्ता मूर्तिः यस्य सः अव्यक्तमूर्तिः ।
सर्वभूतानि— सर्वाणि भूतानि ।

सचित्र

# वाल्मीकि रामायण



( १ ) बालकांड, ( २-३ ) अयोध्याकांड १, ( ४ ) अरण्यकांड, ( ५ ) किष्किन्धाकांड, ( ६ ) सुंदरकांड, ( ७ ) युद्धकांड पूर्वार्ध ये ७ पुस्तक तैयार हैं। ( ८ ) युद्धकांड उत्तरार्ध छप रहा है।

रामायणके इस संस्करणमें पृष्ठके ऊपर श्लोक दिये हैं, पृष्ठके नीचे आधे भागमें उनका अर्थ दिया है और आवश्यक स्थानोंमें विस्तृत टिप्पणियां दी हैं। जहां पाठके विषयमें सन्देह है, वहां सत्य पाठ दर्शाया है।

इन काण्डोंमें रंगीन चित्र हैं और कई सादे चित्र हैं। जहांतक की जा सकती है, वहांतक चित्रोंसे बडी सजावट की है।

**इसका मूल्य**— सात काण्डोंका प्रकाशन १० भागोंमें होगा। प्रत्येक भाग करीब करीब ५०० पृष्ठोंका होगा। प्रत्येक भागका मूल्य ४) रु. तथा डा. व्य. रजिस्ट्रीसमेत १) होगा। यह सब व्यय ग्राहकोंके जिम्मे रहेगा। प्रत्येक भागका मूल्य ४) रु. है, अर्थात् सब दसों भागोंका मूल्य ४०) रु. और सबका डा. व्यय १०) रु. हैं।

मंत्री- स्वाध्याय-मंडल, किल्ला-पारडी ( जि. सूरत )

अंक ३



# संस्कृत-पाठ-माला ।

(संस्कृत-भाषाका अध्ययन करनेका सुगम उपाय)

## तृतीयो भागः ।

लेखक
पं. श्रीपाद दामोदर सातवळेकर,
स्वाध्याय-मंडल, किल्ला-पारडी, (जि॰ सूरत)

सप्तम वार

संवत् २००९, शके १८७४, सन् १९५२

मूल्य ८ आने ।

# सूचना

पाठको ! यह तृतीय भाग आपको दिया जाता है। पूर्ववत् ही इसका अध्ययन आप कीजिये। बीच बीचमें ऐसे पाठ रखे हैं कि जो 'केवल संस्कृत' के ही हैं। वे पाठ यदि आपकी समझमें आगये, तो आप यह समझ सकते हैं कि, उस पाठतकका भाग आपको अवगत हो चुका है। परंतु यदि वे पाठ समझमें नहीं आवे, तो आपको पूर्वके पाठ पुनः देखने चाहिये।

इस युक्तिसे आप अपनी परीक्षा भी कर सकते हैं और शीघ्र आगे भी बढ सकते हैं।


स्वाध्याय-मंडल, किल्ला पारडी (जि. सूरत) — लेखक श्रीपाद दामोदर सातवळेकर



मुद्रक और प्रकाशक-व० श्री० सातवळेकर, बी. ए,
भारत-मुद्रणालय, किल्ला पारडी ( जि० सूरत )

ॐ

# संस्कृत-पाठ-माला

## तृतीय भाग।

### पाठ १

अकारान्त पुल्लिंग शब्दोंके रूप निम्न प्रकार बनते हैं-

| | | |
|---|---|---|
| १ प्रथमा | कुमारः | = लडका |
| संबोधन ( हे ) | कुमार ! | = हे लडके ! |
| २ द्वितीया | कुमारम् | = लडकेको |
| ३ तृतीया | कुमारेण | = लडकेने |
| ४ चतुर्थी | कुमाराय | = लडकेके लिये |
| ५ पंचमी | कुमारात् | = लडकेसे |
| ६ षष्ठी | कुमारस्य | = लडकेका |
| ७ सप्तमी | कुमारे | = लडकेमें |

इसी प्रकार निम्नलिखित अकारान्त शब्दोंके रूप होते हैं—

| | |
|---|---|
| पुत्रः—लडका | पंकः—कीचड |
| प्राणः—प्राण | दुर्गः—गढ |
| राक्षसः—राक्षस | द्वारपालः—द्वारका रक्षक |
| यज्ञः—यज्ञ | वृषभः—बैल |
| अश्वः—घोडा | मेषः—मेढा, भेडा |

| | |
|---|---|
| कंदुकः—गेंद | मंचकः—मेज, पलंग, टेबल |
| सिंहः—सींह, बबर | विष्टरः—आसन, कुर्सी |
| देशः—देश, प्रांत | भागः—हिस्सा |
| खण्डः—टुकडा | धर्मः—धर्म |

संस्कृत-वाक्यानि ।

१ तव पुत्रः कुत्र गतः ? २ मम पुत्रः अद्य मातुलस्य गृहं गतः । ३ स कदा आगमिष्यति ? ४ स श्वः आगमिष्यति । ५ तस्मिन् पंके वृषभः पतितः । ६ तं विष्टरं अत्र आनय । ७ मम मंचकः अत्र नास्ति । ८ धर्मस्य तत्त्वं त्वं जानासि किम् ? ९ अस्मिन् देशे राक्षसः नास्ति । १० तव द्वारपालः तत्र अस्ति किम् ? ११ त्वं यज्ञस्य अनुष्ठानं किं न करोषि ? १२ अस्य गृहस्य एष भागः अस्ति । १३ तस्य पुत्रः ग्रामं गतः ।

भाषा-वाक्य

१ तेरा लडका कहां गया ? २ मेरा लडका आज मामाके घर गया । ३ वह कब आवेगा ? ४ वह कल आवेगा । ५ उस कीचडमें बैल गिर गया है । ६ उस कुर्सीको यहां ला । ७ मेरा मेज यहां नहीं है । ८ धर्मका तत्त्व तू जानता है क्या ? ९ इस देशमें राक्षस नहीं है । १० तेरा द्वारपाल वहां है क्या ? ११ तू यज्ञका अनुष्ठान क्यों नहीं करता ? १२ इस घरका यह भाग है । १३ उसका लडका ग्राम चला गया ।

## पाठ २

### संस्कृत-वाक्यानि।

१ मम पुत्रं पश्य। २ पुत्रेण फलं न आनीतम्। ३ पुत्राय पुस्तकं देहि। ४ पुत्रात् दूरं न गच्छ। ५ पुत्रस्य वस्त्रं नय। ६ पुत्रे सर्वं सुखं भवति। ७ स धर्मेण राज्यं रक्षति। ८ तस्य भागं त्वं किं न इच्छसि? ९ विष्टरे पुस्तकं रक्षितम्। १० मञ्चकस्य समीपं एव विष्टरः अस्ति। ११ दुर्गः कुत्र अस्ति? १२ कः दुर्गः? १३ कृष्णदुर्गः इति यः अस्ति। १४ कृष्णदुर्गः विजयदुर्गस्य समीप एव अस्ति।

### भाषा-वाक्य।

१ मेरे पुत्रको देख। २ पुत्रने फल नहीं ला रखा। ३ पुत्रको पुस्तक दो। ४ पुत्रसे दूर मत जा। ५ पुत्रका वस्त्र ले जा। ६ पुत्रमें सब सुख होता है। ७ वह धर्मसे राज्यकी रक्षा करता है। ८ उसके हिस्सेको तू क्यों नहीं चाहता? ९ कुर्सीपर पुस्तक रखा है। १० मेजके पास ही कुर्सी है। ११ गढ कहां है? १२ कौनसा गढ? १३ कृष्णदुर्ग जो है। १४ कृष्णदुर्ग विजयदुर्गके पास ही है।

### संस्कृत-वाक्यानि।

सर्वं बलं प्राणे एव भवति। प्राणः एव बलं अस्ति। रावणः नाम एकः राक्षसः अस्ति। लंकानगरे तस्य राज्यं अस्ति। सिंहः यथा वने भवति तथा अश्वः ग्रामे

भवति । मंचके पुस्तकं नास्ति । गृहे मंचकः अपि नास्ति । अश्वं वीरः आरोहति । वीरः अश्वं आरोहति किम् ? वृषभं कः आरोहति ? महादेवः वृषभं आरोहति । अस्य दुर्गस्य कः द्वारपालः अस्ति ? कंदुकः त्वया कुत्र रक्षितः ? यथा मेषः धावति तथा एव वृषभः अपि धावति । तत्र पंकः अस्ति, तत्र न गच्छ । यथा पिता कुमारं पश्यति तथा कुमारः जनकं पश्यति । चोरेण मम अश्वः नीतः । द्वारपालस्य शस्त्रं तीक्ष्णं अस्ति । दुर्गे सैनिकः भवति । गृहे गृहस्य रक्षकः अस्ति ।

## संधि किये हुए वाक्य ।

तव पुत्रः कुत्र गतः ? कुत्र गतस्तव पुत्रः? कुत्र तव पुत्रो गतः ? मम पुत्रोऽद्य मातुलस्य गृहं गतः । मातुलस्य गृहमद्य गतो मम पुत्रः । मम पुत्रो गतोऽद्य मातुलस्य गृहम् । मम मंचकोऽत्र नास्ति । नास्त्यत्र मम मंचकः । तव द्वारपालस्तत्रास्ति किम् ? किं तत्रास्ति तव द्वारपालः ? अस्ति किं तव द्वारपालस्तत्र ? रावणो नामैको राक्षसोऽस्ति । राक्षसोऽस्त्येको रावणो नाम । एको राक्षसो रावणो नामास्ति । अश्वमारोहति वीरः । आरोहत्यश्वं वीरः । वीर आरोहत्यश्वम् । कुमारो जनकं पश्यति । जनकं कुमारः पश्यति ।

## पाठ ३

इस पाठमें निम्नलिखित श्लोक पढिये—

न कांक्षे विजयं कृष्ण न च राज्यं सुखानि च।
किं नो राज्येन गोविंद किं भोगैर्जीवितेन वा ॥
(भ० गीता १।३२)

पद—न। कांक्षे। विजयं। कृष्ण। न। च। राज्यं। सुखानि। च। किं। नः। राज्येन। गोविंद। किं। भोगैः। जीवितेन। वा ॥

अन्वयः–हे कृष्ण! विजयं न कांक्षे। राज्यं सुखानि च न (कांक्षे)। हे गोविंद! राज्येन नः किं? भोगैः किं? जीवितेन वा किम्?

अर्थ–हे कृष्ण! मैं विजय नहीं (कांक्षे) चाहता। राज्य और सुख भी नहीं चाहता। हे गोविंद! राज्यसे (नः) हमें क्या? भोगोंसे क्या? और जीवितसे भी क्या [मिलेगा]?

येषामर्थे कांक्षितं नो राज्यं भोगाः सुखानि च।
त इमेऽवस्थिता युद्धे प्राणांस्त्यक्त्वा धनानि च ॥
(भ० गी० १।३३)

पद—येषां। अर्थे। कांक्षितं। नः। राज्यं। भोगाः। सुखानि। च। ते। इमे। अवस्थिताः। युद्धे। प्राणान्। त्यक्त्वा। धनानि। च।

अन्वयः-येषां अर्थे राज्यं नः कांक्षितम्, येषां अर्थे भोगाः नः (कांक्षिताः), येषां च अर्थे सुखानि नः ( कांक्षितानि ), ते इमे प्राणान् धनानि च त्यक्त्वा युद्धे अवस्थिताः॥

अर्थ— ( येषां ) जिनके ( अर्थे ) लिये राज्य ( नः ) हमने ( कांक्षितं ) चाहा था, जिनके लिये भोग हमने चाहे थे, तथा जिनके लिये सुख हमने चाहे थे, (ते) वे ( इमे ) ये प्राणों और धनोंको ( त्यक्त्वा ) छोडकर ( युद्धे ) युद्धमें ( अवस्थिताः ) उपस्थित हैं।

आचार्याः पितरः पुत्रास्तथैव च पितामहाः।
मातुलाः श्वशुराः पौत्राः श्यालाः संबंधिनस्तथा॥
( भ० गी० १।३४ )

अर्थ—आचार्य, पितर, पुत्र तथा ( पितामहाः ) दादा, ( मातुलाः ) मामा, ( श्वशुराः ) ससुर, ( पौत्राः ) पोते, साले, तथा संबंधी [ लोग ये हैं ]।

संधि किये हुए वाक्य।

१ अहं विजयं न कांक्षे। नाहं विजयं कांक्षे। विजयमहं न कांक्षे। न कांक्षे विजयमहम्। न कांक्षेऽहं विजयम्।

२ अहं राज्यमपि नेच्छामि। नेच्छाम्यहं राज्यम्। राज्यं नाहमिच्छामि। नाहमिच्छामि राज्यम्। इच्छामि नाहं राज्यम्।

## पाठ ४

एतान्न हन्तुमिच्छामि घ्नतोऽपि मधुसूदन ।
अपि त्रैलोक्यराज्यस्य हेतोः किं नु महीकृते ॥

पदानि—एतान् । न । हन्तुं । इच्छामि । घ्नतः । अपि । मधु+सूदन । अपि । त्रैलोक्य+राज्यस्य । हेतोः । किं । नु । मही+कृते ॥ ( भ० गी० १।३५ )

अन्वयः—हे मधुसूदन ! एतान् घ्नतः त्रैलोक्यराज्यस्य हेतोः अपि हन्तुं न इच्छामि । किं नु महीकृते ?

अर्थ— हे ( मधु+सूदन ) मधु दैत्यको मारनेवाले कृष्ण ! ( एतान् ) इनको ( घ्नतः ) हमारा घात करनेवाले हैं तो भी त्रैलोक्यके राज्यके ( हेतोः ) हेतुसे भी ( हन्तुं ) मारनेकी इच्छा नहीं करता हूं । फिर ( महीकृते ) पृथ्वीके राज्यके लिये क्या है ?

निहत्य धार्तराष्ट्रान्नः का प्रीतिः स्याज्जनार्दन ।
पापमेवाश्रयेदस्मान्हत्वैतानाततायिनः॥(भ.गी.१।३६)

पदानि-निहत्य । धार्तराष्ट्रान् । नः । का । प्रीतिः । स्यात् । जनार्दन । पापं । एव । आश्रयेत् । अस्मान् । हत्वा । एतान् । आततायिनः ।

अन्वयः-हे जनार्दन ! धार्तराष्ट्रान् निहत्य नः का प्रीतिः स्यात् ? एतान् आततायिनः हत्वा अस्मान् पापं एव आश्रयेत् ।

अर्थ-हे ( जनार्दन ) कृष्ण ! ( धार्तराष्ट्रान् ) धृतराष्ट्रके

पुत्रोंको ( निहत्य ) मारकर ( नः ) हमारा क्या (प्रीतिः) प्रिय ( स्यात् ) होगा ? ( एतान् ) इन ( आततायिनः ) दुष्टोंको (हत्वा) मारकर (अस्मान्) हमें पाप ही (आश्रयेत्) आश्रित होगा ।

तस्मान्नार्हा वयं हन्तुं धार्तराष्ट्रान्स्वबांधवान् ।
स्वजनं हि कथं हत्वा सुखिनः स्याम माधव ॥

पदानि-- तस्मात् । न । अर्हाः । वयं । हन्तुं । धार्तराष्ट्रान् । स्व+बांधवान् । स्व+जनं । हि । कथं । हत्वा । सुखिनः । स्याम । माधव ॥ ( भ. गी. १।३७ )

अन्वयः—हे माधव ! तस्मात् स्वबांधवान् धार्तराष्ट्रान् हन्तुं वयं न अर्हाः । हि स्वजनं हत्वा कथं सुखिनः स्याम ?

अर्थ— हे ( माधव ) कृष्ण ! ( तस्मात् ) इसलिये ( स्व+बांधवान् ) अपने भाई ( धार्तराष्ट्रान् ) धृतराष्ट्रके पुत्रोंको ( हन्तुं )मारनेके लिये ( वयं ) हम ( न अर्हाः ) योग्य नहीं हैं । ( हि ) क्योंकि ( स्व+जनं ), अपने ही मनुष्योंको ( हत्वा ) मारकर ( कथं ) कैसे हम ( सुखिनः ) सुखी ( स्याम ) होंगे ?

पाठक यहां अनुभवसे देखें कि इन श्लोकोंका अर्थ कितने अंशमें उनके ध्यानमें आने लगा है । श्लोकके पद कैसे बनते हैं, पदोंके पश्चात् अन्वय किस रीतिसे होता है और अन्वय बनते ही कैसा अर्थ सुगम हो जाता है, इसका अनुभव पाठक देखें ।

## पाठ ५

हे कृष्ण ! अहं विजयं न कांक्षे ।
हे गोविंद ! अहं राज्यं अपि न इच्छामि ।
हे देव ! अहं सुखं अपि न वांच्छामि ।
राज्येन, भोगेन, जिवितेन वा मम किं भवति ?
हे मित्र ! त्वं राज्यं इच्छासि वा न इच्छासि ?
त्वं सुखं अपि कथं न वांच्छसि ?
सः जीवितं वांच्छति परन्तु सुखं न इच्छति ।
यः विजयं न कांक्षति सः राज्यं अपि न इच्छति ।
यः सुखं इच्छति सः राज्यं विजयं च वांच्छति ।
भोगात् सुखं भवति वा न भवाति ?
यस्य अर्थे राज्यं कांक्षितं सः कुत्र गतः ?
सः पुरुषः भोगं सुखं च त्यक्त्वा विजयं इच्छति ।
सः वीरः धनं त्यक्त्वा युद्धे अवस्थितः ।
राज्यस्य अर्थे अहं धनं प्राणं च इच्छामि ।
सः धनस्य अर्थे राज्यं प्राणं च वांच्छति ।
त्वं तु प्राणस्य अर्थे राज्यं धनं च इच्छासि ।
त्वं किं तस्मिन् युद्धे न अवस्थितः ?
स वस्त्रं पुस्तकं च त्यक्त्वा तत्र गतः ।
तेन दुग्धं जलं च त्यक्त्वा अन्नं एव खादितम् ।

अहं मनुष्यं हन्तुं न इच्छामि ।
अहं कं अपि जन्तुं हन्तुं न इच्छामि ।
अहिंसा धर्मः एव मम धर्मः अस्ति ।
त्रैलोक्यस्य राज्यस्य हेतोः अपि तं हंतुं न इच्छामि ।
महीराज्यस्य कृते अपि हन्तुं न इच्छामि ।
तं निहत्य मम का प्रीतिः स्यात् ?
कौरवान् निहत्य नः किं कल्याणं स्यात् ?
पशुं निहत्य मनुष्यस्य किं कल्याणं स्यात् ?
राष्ट्रं निहत्य नृपस्य का प्रीतिः स्यात् ?
तं हत्वा पापं एव अस्मान् आश्रयेत् ।
आततायिनः हत्वा नः पापं न आश्रयेत् ।
दुष्टं हत्वा पापं भवति वा न भवति ?
स्वबान्धवान् हन्तुं वयं न अर्हाः ।
स्वमानवान् हन्तु त्वं न अर्हः ।
मूर्खः स्वबान्धवान् एव हन्तुं यत्नं करोति ।
सः स्वजनं हत्वा कथं सुखी भवति ?
दुर्जनः एव स्वजनं हत्वा सुखी भवति ।
हितवचनं एव श्रेयः भवति ।
यत् अत्यन्तं भूतहितं तत् वचनं श्रेयः अस्ति ।
यः मरणात् भीतः नास्ति स एव वीरः ।

विशुद्धस्य मृत्युः शोभनः भवति ।
यः स्वधर्मे तिष्ठति स एव श्रेष्ठः पुरुषः ।
यस्य शिरः पलितं भवति स वृद्धः न भवति ।
तरुणस्य अपि शिरः पलितं भवति ।
यदा नृपः अत्र भवति तदा एव सुखं भवति ।
रामचन्द्रस्य शोभनं भूषणं अत्र नास्ति ।
शुभ्रं पुष्पं त्वया किं न आनीतम् ?
यथा कृपणः धनं रक्षति तथा वीरः यशः रक्षति ।
सः पुरुषः मद्रासनगरात् कदा आगतः ।
यदा रथः तत्र गच्छति, तदा पुरुषः आगच्छति ।
सर्वभूतानां हृदयदेशे ईश्वरः तिष्ठति ।
सः ईश्वरः सर्वभूतानि भ्रामयति ।
सर्वभावेन तं एव ईश्वरं शरणं गच्छ ।
तस्य प्रसादात् उपासकः परमां शान्तिं प्राप्स्यति ।
ईश्वरस्य प्रसादात् उत्तमं शाश्वतं सुखं भवति ।
अहं ईश्वरं सर्वभावेन शरणं गच्छामि ।

पूर्व पाठोंमें जो श्लोक दिये हैं उनकी वाक्य—रचना समझमें आनेसे इस प्रकारके अनेकानेक वाक्य बनानेकी योग्यता प्राप्त हो सकती है । पाठक इसी प्रकार उपयोगी वाक्य प्रतिसमय बनाते जायंगे, तो उनकी संस्कृत—भाषामें शीघ्र प्रगति हो जायगी । संस्कृत सीखनेका यही सुगम उपाय है ।

इस पुस्तकमें जो पठनका क्रम रखा है, वह अत्यंत सुगम है। इस क्रमके अनुसार जो पाठक पढेंगे उनको विना आयास संस्कृतका ज्ञान हो सकता है। अब संधि किये हुए वाक्य पढिये—

१ अहं सुखमपि न वांच्छामि। नाहं सुखमपि वांच्छामि। न वांच्छामि सुखमप्यहम्। सुखमहमपि न वांच्छामि।

२ स जीवितं वांच्छति परन्तु सुखं नेच्छति। जीवितं स वांच्छति परन्तु नेच्छति सुखम्। स न सुखमिच्छति परन्तु जीवितं वांच्छति।

३ यः सुखमिच्छति स राज्यं विजयं च वांच्छति। सुखं य इच्छति स राज्यं विजयं च वांच्छति। स वांच्छति राज्यं विजयं च य इच्छति सुखम्।

४ स वीरो धनं त्यक्त्वा युद्धेऽवस्थितः। धनं त्यक्त्वा स वीरोऽवस्थितो युद्धे। अवस्थितः स वीरो युद्धे धनं त्यक्त्वा।

५ अहं मनुष्यं हन्तुं नेच्छामि। नेच्छाम्यहं मनुष्यं हन्तुम्। हन्तुं नेच्छाम्यहं मनुष्यम्।

६ अहं कमपि हन्तुं नेच्छामि। नेच्छाम्यहं कमपि हन्तुम्। कमप्यहं हन्तुं नेच्छामि। हन्तुं नेच्छाम्यहं कमपि।

## पाठ ६

(१) भगवान् तपस्वी, स्वाध्यायशीलः वाल्मीकिः ऋषिः एकदा वनं विचचार।

(२) समीपं एव स ऋषिः एकं क्रौञ्चमिथुनं अपश्यत्।

(३) तस्मात् एकं क्रौञ्चं पापः निषादः जघान।

(४) क्रौञ्चं हतं दृष्ट्वा परमकारुणिकः ऋषिः अवदत्।

मा निषाद प्रतिष्ठां त्वमगमः शाश्वतीः समाः।
यत्क्रौञ्चमिथुनादेकमवधीः काममोहितम्॥

( १ ) भगवान् तपस्वी स्वाध्याय करनेवाला वाल्मीकि ऋषि ( एकदा ) एक समय वनमें ( विचचार ) भ्रमण करता रहा। ( २ ) पास ही वह ऋषि एक क्रौंच पक्षीका ( मिथुनं ) जोडा (अपश्यत्) देखता रहा। (३) उस [ जोडे ] से एक क्रौंच पक्षीको पापी निषादने ( जघान ) मारा। ( ४ ) क्रौंच पक्षीको मारा हुआ ( दृष्ट्वा ) देखकर परम ( कारुणिकः ) दयामय ऋषि ( अवदत् ) बोले—

अन्वयः- हे निषाद ! त्वं शाश्वतीः समाः प्रतिष्ठां मा अगमः। यत् क्रौंचमिथुनात् एकं काममोहितं अवधीः।

अर्थ- हे (निषाद्) माल ! तू (शाश्वतीः) बहुत (समाः) वर्ष ( प्रतिष्ठां) जीवित रहनेकी अवस्थाको नहीं ( अगमः) जाओगे अर्थात् बहुत वर्ष जीवित नहीं रहोगे। (यत्) क्योंकि

(५) अयं श्लोकः समाक्षरैः तेन महर्षिणा गातः ।
(६) सः ऋषिः अस्य श्लोकस्य पादं पादं पुनः पुनः अनुव्याहरत् ।
(७) इमं श्लोकं दृष्ट्वा मुनिः सन्तुष्टः ।
(८) ईदृशैः एव श्लोकैः संपूर्ण रामायणं काव्यं करवाणि इति महर्षेः बुद्धिः जाता ।
(९) ऋषिः तथा एव रामचन्द्रस्य चरितं चकार ।
(१०) तत् एव रामायणं अस्ति ।
(११) सरयूनदीतीरे कोसलः नाम महान् जनपदः आसीत्

---

क्रौंचपक्षीके जोडेमेंसे एक कामसे मोहित हुएको ( अवधीः ) तूने मारा है । चूंकि तुमने काममोहित क्रौंचपक्षीको मारा है इसलिये तू बहुत देर तक जीवित नहीं रहेगा। (५) यह श्लोक सम अक्षरोंमें उस महर्षिने गाया । (६) वह ऋषि इस श्लोकका एकएक पाद पुनः पुनः बोलने लगा। (७) इस श्लोकको देखकर मुनि संतुष्ट हुआ। (८) (ईदृशैः) ऐसे ही श्लोकोंसे संपूर्ण रामायण काव्य (करवाणि) करूंगा, ऐसी महर्षिकी बुद्धि ( जाता ) हो गई । (९) ऋषिने उसी प्रकार रामचन्द्रका चरित्र ( चकार ) बनाया, किया। (१०) वही रामायण है । (११) सरयूनदीके किनारे कोसल नामक बडा [ जनपदः ] देश [ आसीत् ] था ।

## पाठ ७

(१) सः कोसलः जनपदः धनधान्यसंपन्नः मुदितः च आसीत् । (२) तस्य कोसल—देशस्य महापुरी अयोध्या नगरी राजधानी आसीत् । (३) तां अयोध्यां राजधानीं राष्ट्रवर्धनः राजा दशरथः पालयामास । (४) स राजा दशरथः दीर्घदर्शी महातेजाः जनप्रियः वशी सत्यप्रतिज्ञः च आसीत् । (५) तस्य भूपस्य हिते रताः यशस्विनः अष्टौ अमात्याः बभूवुः । (६) तेषां पुरे वा राष्ट्रे वा एकः अपि असत्यवादी नरः न आसीत् । (७) न अपि दुष्टः पापी वा चौरः वा तत्र जनपदे आसीत् । (८) सर्वं राष्ट्रं प्रशान्तं आनंदपूर्णं च आसीत् । (९) तत्र सर्वः अपि जनः सुखपूर्णः मुदितः ईश्वरभक्तः च आसीत् ।

(१) वह कोसल देश धन और धान्यसे सम्पन्न और (मुदितः) आनंदित था । (२) उस कोशलदेशकी बडी अयोध्या नगरी राजधानी थी । (३) उस अयोध्या राजधानीका, राष्ट्र-बढानेवाला राजा दशरथ, पालन करता था । (४) वह राजा दशरथ दूरदर्शी, (महा) बडा तेजस्वी, लोकप्रिय, (वशी) संयमी और सत्यवचनी था । (५) उस

"राजाके हितमें तत्पर यशस्वी आठ ( अमात्याः ) मंत्री ( बभूवुः ) थे। (६) उनके नगरमें अथवा राष्ट्रमें एक भी असत्य भाषण करनेवाला मनुष्य नहीं था। ( ७ ) नहीं कोई दुष्ट पापी अथवा चोर उस देशमें था। (८) सब राष्ट्र शांतियुक्त और आनंदसे पूर्ण था। ( ९ ) वहां सभी लोग सुखी ( मुदिताः ) आनंदित और ईश्वरभक्त थे।

पाठक इस पाठके संस्कृत भागको वारवार पढें। इतनी-वार पढें कि करीब ये वाक्य स्मरणमें रहें। एकवार भाषाके अर्थके साथ पढेंगे तो पुनः अर्थ देखनेके विना ही संस्कृत भाग समझमें आ जायगा। अब संधि किये संस्कृत वाक्य पढिये-

संधि किये हुए वाक्य।

भगवान्तपस्वी स्वाध्यायशीलो वाल्मीकिर्ऋषिरेकदा वनं विचचार। समीपमेव स ऋषिरेकं क्रौंचमिथुनमपश्यत्। तस्मादेकं क्रौञ्चं पापो निषादो जघान। क्रौञ्चं हतं दृष्ट्वा परमकारुणिक ऋषिरवदत्—

" मा निषाद प्रतिष्ठां त्वमगमः शाश्वतीः समाः। यत्क्रौञ्चमिथुनादेकमवधीः काममोहितम्।" अयं श्लोकस्समाक्षरैस्तेन महर्षिणा गीतः। स ऋषिरस्य श्लोकस्य पादं पादं पुनः पुनरनुव्याहरत्। इमं श्लोकं दृष्ट्वा स मुनिः संतुष्टः। ईदृशैरेव श्लोकैः संपूर्णं रामायणं काव्यं करवाणीति महर्षेर्बुद्धिर्जाता।

## पाठ ८

अब इस पाठमें निम्नलिखित शब्द स्मरण कीजिये-

| | |
|---|---|
| वत्सः—बछडा, बालक | चरणः-पांव |
| रसः—रस | अर्भकः-बालक |
| मूषकः-चूहा | रथः-रथ, गाडी |
| प्रसादः-प्रसाद | पाकः-पाक ( अन्न ) |
| नृपः-राजा | पटः-वस्त्र |
| लेखकः-लेखक | उपदेशकः-उपदेशक |
| रूप्यकः-रुपया | आणकः-आना |

संस्कृत वाक्यानि ।

१ हे नृप! प्रसादं कुरु। २ उपदेशकः वत्साय रसं ददाति । ३ मूषकः अन्नं खादति । ४ तव पटः कुत्र अस्ति? ५ मम रथः तेन नीतः। ६ अद्य लेखकः लेखनाय न आगतः। ७ त्वया पाकः कृतः न वा?

भाषा-वाक्य

१ हे राजा! प्रसाद कर। २ उपदेशक बछडेके लिये रस देता है। ३ चूहा अन्न खाता है। ४ तेरा वस्त्र कहां है? ५ मेरा रथ उसने लिया। ६ आज लेखक लिखनेके लिये नहीं आया। ७ तूने पाक बनाया या नहीं?।

*

## संस्कृत–वाक्यानि

वत्सं अत्र आनय। अर्भकं तत्र नय। स पुरुषः बालकं अत्र न रक्षति। कथं तेन पटः रक्षितः? एकस्य आणकस्य अन्नं देहि। एकस्य रूप्यकस्य मोदकान् आनय। तव कार्यालये लेखकः किं करोति? यदा लेखकः न आगच्छति तदा तत्र कः लिखति? उपदेशकः धर्मस्य उपदेशं कर्तुं ग्रामात् ग्रामं नगरात् नगरं च भ्रमति। स रथेन गच्छति वा न वा? यथा त्वं पटं करोषि तथा अहं अपि करोमि। नृपस्य नगरं पश्य, तत् अतिशोभनं अस्ति। त्वया धान्यं सूपकात् रक्षणीयम्। यत्र नृपः भवति तत्र सेवकः अपि भवति एव। अहं ईश्वरस्य प्रसादं इच्छामि, न किंचित् अपि अन्यत् इच्छामि। यत्र दीपः अस्ति तत्र गच्छ। पुस्तकं च पठ। इदानीं अत्र कः अपि दीपः नास्ति। पुस्तकं दीपस्य प्रकाशेन एव पठितुं शक्नोमि।

## संधि किये हुए वाक्य

वत्समत्रानय। आनय वत्समत्र। अत्र वत्समानय। स पुरुषो बालकमत्र न रक्षति। नात्र रक्षति स पुरुषो बालकम्। बालकं न रक्षत्यत्र स पुरुषः। यत्र नृपो भवति तत्र सेवको भवत्येव। भवत्येव तत्र सेवको यत्र भवति नृपः।

## पाठ ९

### शब्द

निम्नलिखित शब्द स्मरण कीजिये—

| | |
|---|---|
| आम्रः–आम | आपणः--बाजार, दुकान |
| सूदः–अन्न पकानेवाला | ग्रामः--गांव |
| अपूपः--पूरी | देशः--देश |
| ओदनः -भात | निवासः–निवास |
| मूर्खः- मूढ | प्राज्ञः--ज्ञानी |

### संस्कृत--वाक्यानि

१ अस्मिन् ग्रामे आपणः कुत्र अस्ति ? २ मम उद्याने एकः आम्रवृक्षः अस्ति । ३ तस्य फलं अत्यन्तं स्वादु वर्तते । ४ यथा प्राज्ञः वदति तथा मूर्खः न वदति । ५ मम सूदः ओदनं पचति । ६ त्वया अपूपः भक्षितः वा न ?

### भाषा—वाक्य

१ इस ग्राममें बाजार कहां है ? २ मेरे बागमें एक आमका वृक्ष है । ३ उसका फल अत्यन्त स्वादु होता है । ४ जैसा ज्ञानी बोलता है, वैसा मूढ नहीं बोलता । ५ मेरा रसोइया भात पकाता है । ६ तूने पूरी खाई या नहीं ?

## संस्कृत-वाक्यानि

यत् अन्नं स्वादु अस्ति, तदेव त्वं भक्षय। यत् अन्नं स्वादु नास्ति तत् कदाचित् अपि त्वं न भक्षय। इदानीं अन्नस्य भक्षणस्य समयः। अहं भोजनसमये ओदनं अपूपं च भक्षयामि; जलं च पिबामि। यथा मूढः अन्नं भक्षयति तथा प्राज्ञः अपि भक्षयति। तव सेवकः मूर्खः एव अस्ति। सः एव जानाति किं अन्नं स्वादु किंवा अस्वादु ?

यदा वीरः गच्छति तदा शस्त्रेण सह एव गच्छति। यथा योधः युद्धं करोति, तथा प्राज्ञः अपि करोति एव। परंतु वीरस्य यथा शस्त्रयुद्धं भवति तथा प्राज्ञस्य शब्दयुद्धं भवति। तव कुत्र निवासः ? मम निवासः अत्र एव। यत्र सः अस्ति तत्र एव अहं अस्मि। प्राज्ञेन सह एव अहं गमिष्यामि।

## संधि किये हुए वाक्य

यदन्नं स्वाद्वस्ति तदेव त्वं भक्षय। अन्नं यत्स्वाद्वस्ति तदेव त्वं भक्षय। त्वं तदेवान्नं भक्षय यत्स्वाद्वस्ति। भक्षय त्वमन्नं तदेव यदस्ति स्वादु। त्वमेव तदन्नं भक्षय स्वादु यदास्ति। मम निवासोऽत्रैवास्ति। अत्रैवास्ति मम निवासः। निवासोऽस्त्यत्रैव मम। अस्त्यत्रैव मम निवासः। अस्ति ममात्रैव निवासः।

## पाठ १०

जलं पिबति। अन्नं भक्षयामि। दुग्धं पास्यामि। तस्य वृक्षस्य फलं अत्र अहं आनयामि, तं फलं च भक्षयामि। मार्जारः दुग्धं पिबति। ब्राह्मणः वेदं पठति। क्षत्रियः युद्धं करोति। वैश्यः आपणे वाणिज्यं करोति। शूद्रः सेवकः भवति।

यथा त्वं जानासि तथा एव वद। कदापि असत्यं न वद। सत्यस्य वचनं श्रेयः। यत् अत्यन्तं भूतहितं तत् एव सत्यं इति मम मतम्। नरकस्य त्रिविधं द्वारं। कामः क्रोधः तथा लोभः, तस्मात् एतत् त्रयं त्यजेत्।

अस्मिन् ग्रामे तव गृहं अस्ति किम्? तव गृहे अश्वः अस्ति वा न? मम गृहे एक एव अश्वः अस्ति। तं अश्वं अहं प्रतिदिनं आरोहामि। तं न कः अपि अन्यः आरोहति।

परवशं सर्वं दुःखमेव। सर्वं सुखं यत आत्मवशं भवति। एतत् सुखस्य लक्षणं त्वं विद्धि।

तव गृहे इदानीं तव पितामहः वर्तते वा न? तव माता कुत्र गता इदानीम्? अद्य एव मम भ्राता ग्रामात् आगतः। यत्र त्वं गतः तत्र एव मम भ्राता अपि गतः।

तस्मिन् युद्धे तस्य पार्थिवस्य पराभवः जातः। अस्मिन् ग्रंथे तत् एव लिखितं अस्ति। यथा वने सिंहः तथा नगरे नृपः भवति। इदानीं सैनिकः कुत्र गच्छति? युद्धाय गच्छति इति अहं जानामि।

यथा सुवर्णकारः सुवर्णस्य भूषणं करोति तथा त्वमपि कुरु। तस्य कपोतः कुत्र गतः? पश्य, इदानीं सः कपोतः तस्मात् देशात् आगच्छति।

त्वं किं न क्रीडसि? अहं सायंकाले एव क्रीडामि न तु प्रातःसमये। यथा त्वं क्रीडसि तथा देवदत्तः न क्रीडितुं शक्नोति। एतत् स्थानं शोभनं अस्ति। अत्र एव अहं क्रीडामि। त्वं अत्र क्रीडसि तर्हि अहं अत्र नैव क्रीडिष्यामि।

स चक्रं भ्रामयति। तत् त्वं पश्यसि किम्?-यथा सः चक्रं भ्रामयितुं शक्नोति तथा अहं न शक्नोमि।

क्षमावतां एक एव दोषः अस्ति न द्वितीयः। कः स दोषः? एष दोषः, यत् जनः क्षमया युक्तं एनं अशक्तं मन्यते।

हे राजेन्द्र! शमीकः नाम परमधर्मात्मा दान्तः शान्तः महातपाः एकः ऋषिः तव राज्ये तव नगरस्य समीपे एव वर्तते। हे राजन्! मौनव्रतस्य तस्य स्कंधे एकः मृतः सर्पः त्वया धनुष्कोट्या अवसक्तः।

## पाठ ११

१ सः ऋषिः तव तत् कर्म क्षान्तवान्। परन्तु तस्य पुत्रः न चक्षमे।

२ हे राजेन्द्र ! तेन क्रुद्धेन ऋषिपुत्रेण त्वं शप्तः आसि। पितुः अज्ञातं एव शप्तः आसि।

३ हे नृप ! तत्र रक्षां कुरु इति पुनः पुनः स ऋषिः त्वां अब्रवीत्। तं क्रुद्धं पुत्रं यन्तुं स ऋषिः शमीकः न शक्नोति। अतः तेन अहं प्रेषितः।

४ तत् यथा इच्छसि तथा कुरु। अहं गच्छामि। इदानीं अहं अत्र स्थातुं न शक्नोमि। शीघ्रमेव मया गन्तव्यम्।

५ पश्य तं पर्वतम्। तस्य नाम हिमाचलः। अस्य पर्वतस्य किं नाम ? अस्य पर्वतस्य नाम सह्यपर्वत इति।

६ कस्मात् नगरात् त्वं आगतः ? काशीनगरात् अहं आगतः। अद्य अहं वेदं पठितुं आगतः। इदानीं एव वेदं पठामि। तथा त्वमपि पठ।

७ हे मित्र ! यदा त्वं स्नानाय गङ्गां गमिष्यसि तदा अहमपि आगमिष्यामि। अहं गंगास्नानं प्रातः समये एव कर्तुमिच्छामि।

## संधि किये हुए वाक्य ।

१ स ऋषिस्तव तत्कर्म क्षान्तवान् । परन्तु तस्य पुत्रो न चक्षमे ।

२ हे राजेन्द्र ! तेन क्रुद्धेनर्षिपुत्रेण त्वं शप्तोऽसि । पितुरज्ञातमेव शप्तोऽसि !

३ हे नृप ! तत्र रक्षां कुर्विति पुनः पुनः स ऋषिः त्वामब्रवीत् । तं क्रुद्धं पुत्रं यन्तुं स ऋषिः शमीको न शक्नोति । अतस्तेनाहं प्रेषितः ।

४ तद्यथेच्छसि तथा कुरु । अहं गच्छामि इदानी-मत्र स्थातुं न शक्नोमि । शीघ्रमेव मया गन्तव्यम् ।

५ पश्य तं पर्वतम् । तस्य नाम हिमाचलः । अस्य पर्वतस्य किं नाम ? अस्य पर्वतस्य नाम सह्यपर्वत इति ।

६ कस्मान्नगरात्त्वमागतः ? काशीनगरादहमागतः । अद्याहं वेदं पठितुमागतः । इदानीमेव वेदं पठामि । तथा त्वमपि पठ ।

७ हे मित्र ! यदा त्वं स्नानाय गङ्गां गमिष्यसि, तदाऽहमप्यागमिष्यामि । अहं गंगास्नानं प्रातःसमय एव कर्तुमिच्छामि ।

सूचना—पूर्व वाक्योंके अनुसंधानसे पाठक जान सकते हैं कि कौनसी संधि किस स्थानपर कैसे हुयी है ।

## पाठ १२

अब निम्नलिखित श्लोक देखिये—

तस्मात्त्वमिन्द्रियाण्यादौ नियम्य भरतर्षभ।
पाप्मानं प्रजहिह्येनं ज्ञानविज्ञाननाशनम्॥
( भ० गी० ३।४१ )

पदानि— तस्मात् । त्वं । इंद्रियाणि । आदौ । नियम्य । भरत+ऋषभ । पाप्मानं प्रजहिहि । एनं । ज्ञान+विज्ञान+नाशनम् ।

अन्वय—हे भरतर्षभ ! त्वं तस्मात् आदौ इंद्रियाणि नियम्य एनं ज्ञानविज्ञाननाशनं पाप्मानं प्रजहिहि ।

अर्थ—हे ( भरत+ऋषभ ) भरतश्रेष्ठ ! तू ( तस्मात् ) इसलिये ( आदौ ) प्रारंभमें इंद्रियोंका ( नियम्य ) संयम कर ( एनं ) इस ज्ञान और विज्ञानके नाशक ( पाप्मानं ) पापीका ( प्रजहिहि ) नाश कर।

वेदानधीत्य वेदौ वा वेदं वाऽपि यथाक्रमम् ।
अविप्लुतब्रह्मचर्यो गृहस्थाश्रममावसेत् ॥
( मनुस्मृति ३।२ )

पदानि—वेदान् । अधीत्य । वेदौ । वा । अपि । यथा-क्रमम् । अ-वि-प्लुत-ब्रह्मचर्यः । गृहस्थाश्रमं । आवसेत् ॥

अन्वयः—वेदान् वेदौ वा वेदं वा अपि यथाक्रमं अधीत्य अविप्लुतब्रह्मचर्यः गृहस्थाश्रमं आवसेत् ।

अर्थ—( वेदान् ) सब वेदोंका ( वेदौ ) दो वेदोंका (वा) अथवा ( वेदं ) एक वेदका ( यथाक्रमं ) क्रमके अनुसार (अधीत्य) अध्ययन कर ( अ-विप्लुत-ब्रह्मचर्यः ) ब्रह्मचर्यको न तोडनेवाला गृहस्थाश्रममें ( आवसेत् ) वसे।

निर्मलो निर्विकल्पोऽहं निश्चलोऽहं निरन्तरम्।
निर्विकारो नित्यपूतो निर्मोहो निःस्पृहोऽस्म्यहम्।

पदानि–निर्मलः। निर्विकल्पः। अहं। निश्चलः। अहं। निरन्तरम्। निर्विकारः। नित्यपूतः। निर्मोहः। निःस्पृहः। अस्मि। अहम्॥

अन्वयः–अहं निर्मलः, अहं निर्विकल्पः, अहं निश्चलः, अहं निरंतरं निर्विकारः, अहं नित्यपूतः, अहं निर्मोहः निःस्पृहः च अस्मि।

अर्थ–( अहं ) मैं निर्मल, (निर्विकल्पः) विकल्प अर्थात् संदेह रहित, (निश्चलः) चंचलतारहित, निरंतर (निर्विकारः) विकाररहित, ( नित्यपूतः )सदा पवित्र ( निर्मोहः ) मोह-रहित और ( निःस्पृहः ) निरिच्छ ( अस्मि ) हूं।

बहुशः द्विवचनमें प्रथमा, संबोधन और द्वितीया वि-भक्तिको 'औ' प्रत्यय लगता है जैसा कि कुमारौ। तृतीया चतुर्थी और पंचमीको 'भ्याम्' जैसा कि कुमाराभ्याम्। और षष्ठी सप्तमीको 'ओस्' प्रत्यय लगता है जैसा कि रामयोः।

## पाठ १३

मातृवत्स्वसृवच्चैव नित्यं दुहितृवच्च ये ।
परदारेषु वर्तन्ते ते नराः स्वर्गगामिनः ॥

पदानि–मातृवत् । स्वसृवत् । च । एव । नित्यं । दुहितृवत् । च । ये । परदारेषु । वर्तन्ते । ते नराः । स्वर्ग-गामिनः ॥

अन्वयः–ये नित्यं मातृवत् स्वसृवत् दुहितृवत् च परदारेषु वर्तन्ते, ते नराः स्वर्गगामिनः ॥

अर्थ–( ये ) जो ( नित्यं ) सदा ( मातृवत् ) माताके समान ( स्वसृवत् ) भगिनीके समान, और ( दुहितृवत् ) पुत्रीके समान ( पर-दारेषु ) परस्त्रीके विषयमें ( वर्तन्ते ) वर्ताव करते हैं ( ते ) वे नर ( स्वर्गगामिनः ) स्वर्गको जानेवाले हैं ।

भावार्थ—दूसरेकी स्त्री बडी उमरवाली हो तो उसको माता, समान आयुवाली हो तो उसे बहिन और छोटी आयुवाली हो तो उसे पुत्री मानकर वर्ताव करनेवाले लोग स्वर्गके भागी होते हैं ।

श्रुतिस्मृत्युदितं धर्ममनुतिष्ठन्हि मानवः ।
इह कीर्तिमवाप्नोति प्रेत्य चानुत्तमं सुखम् ॥

पदानि—श्रुति+स्मृति+उदितं । धर्मम् । अनुतिष्ठन् । हि । मानवः । इह । कीर्तिम् । अवाप्नोति । प्रेत्य । च । अनुत्तमम् । सुखम् ॥

अन्वयः–हि श्रुति-स्मृति-उदितं धर्मं मानवः अनुतिष्ठन् इह कीर्तिं अवाप्नोति, प्रेत्यच अनुत्तमं सुखम् ॥

अर्थ—( हि ) निःसंदेह श्रुति और स्मृतिसे ( उदितं ) प्रकाशित धर्मका (अनुतिष्ठन्) अनुष्ठान करनेवाला (मानवः) मनुष्य (इह) यहां कीर्ति (अवाप्नोति) प्राप्त करता है और (प्रेत्य)मरनेके पश्चात् (अनु-उत्तमं) श्रेष्ठ सुख प्राप्त करता है।

न वै तेषां स्वदते पथ्यमुक्तं।
योगक्षेमं कल्पते नैव तेषाम् ॥
भिन्नानां वै मनुजेन्द्र परायणं।
न विद्यते किंचिदन्यद्विनाशात्॥ ( म.भा.३६।५७ )

अन्वयः—पथ्यं उक्तं तेषां न वै स्वदते। तेषां योगक्षेमं नैव कल्पते। हे मनुजेन्द्र ! भिन्नानां परायणं विनाशात् अन्यत् किंचित् न विद्यते ॥

अर्थ--(पथ्यं) हितकारक (उक्तं) भाषण (तेषां न) उनको नहीं ( स्वदते ) स्वादु लगता। उनका योगक्षेम नहीं होता। हे ( मनुज+इंद्र ) मनुष्योंमें श्रेष्ठ ! ( भिन्नानां ) आपसमें झगडनेवालोंका ( परायणं ) परिणाम विनाशसे अन्य कुछ भी नहीं होता।

इस रीतिसे श्लोकोंका अर्थ करनेसे आपकी संस्कृतमें प्रगति अतिशीघ्र होगी। इसलिये जितनी मेहनत आप संस्कृत श्लोकोंपर करेंगे उतना लाभ आपको निःसंदेह होगा।

इस पाठका अध्ययन अब आप समाप्त करेंगे, उस समय आप इन श्लोकोंको ही दस पन्द्रह वार बडी आवाजमें अवश्य पढिये।

## पाठ १४

इकारान्त पुल्लिंग शब्दके रूप निम्नलिखित प्रकारसे होते हैं–

| | | |
|---|---|---|
| १ प्र० | गिरिः | = पर्वत |
| सं० ( हे ) | गिरे | = ( हे ) पर्वत |
| २ द्वि० | गिरिं | = पर्वतको |
| ३ तृ० | गिरिणा | = पर्वतने |
| ४ च० | गिरये | = पर्वतके लिये |
| ५ पं० | गिरेः | = पर्वतसे |
| ६ ष० | ,, | = पर्वतका |
| ७ स० | गिरौ | = पर्वतमें |

इसी प्रकार निम्नलिखित इकारान्तपुल्लिंग शब्दोंके रूप होते हैं

ऋषिः = ऋषि
मुनिः = मुनि
महर्षिः = महान् ऋषि
कपिः = वानर
अब्धिः = समुद्र
आजिः = युद्ध
उमापतिः = शंकर
कृमिः = कृमि
विधिः = विधि, ब्रह्मा

देवापिः = देवापी नामक मनुष्य
बृहस्पतिः = देवोंके गुरु
शंखपाणिः = शस्त्रधारी वीर
सेनापतिः = सेनापति
इषुधिः = बाणोंकी तूणीर
तित्तिरः = तित्तरपक्षी
दुन्दुभिः = ढोल

## संस्कृत-वाक्यानि

१ ऋषिः आश्रमे तपः करोति। २ मुनिः मौनव्रतः भवति। ३ यथा ऋषिः धर्मं जानाति तथा एव मुनिः अपि जानाति एव। ४ कपिः कथं वृक्षं आरोहति ? ५ वृक्षस्य उपरि तं कपिं पश्य। ६ तेन कपिना वृक्षस्य फलं भक्षितम्। ७ कपये जलं अधुना देहि। ८ अब्धेः जलं स्नानाय हितकरं भवति। ९ आजौ वीरः युद्धं करोति। १० हे उमापते ! मां रक्ष। ११ तस्मिञ्जले कृमिः अस्ति। १२ विधिना जगत् निर्मितम्। १३ इदानीं देवापिः अरण्ये ईश्वरस्य उपासनां करोति। १४ बृहस्पतिना किं कार्यं कृतम् ?

## भाषा-वाक्य

१ ऋषि आश्रममें तप करता है। २ मुनि मौनव्रती होता है। ३ जैसा ऋषि धर्म जानता है वैसा ही मुनि भी जानता ही है। ४ बंदर कैसा वृक्षपर चढता है ? ५ वृक्षके ऊपर उस बंदरको देख। ६ उस बंदरने वृक्षका फल खाया। ७ कपिके लिये जल अभी दे। ८ समुद्रका जल स्नानके लिये हितकारी होता है। ९ युद्धमें वीर युद्ध करता है। १० हे शंकर ! मेरी रक्षा कर। ११ उस जलमें कृमि है। १२ ब्रह्माने जगत्का निर्माण किया। १३ इस समय देवापी अरण्यमें ईश्वरकी उपासना करता है। १४ बृहस्पतिने क्या कार्य किया ?

## पाठ १५

१ शस्त्रपाणिना वीरेण शोभनं युद्धं कृतम् । २ तस्य सेनापतेः सैनिकः अत्र धावति । ३ तस्य वीरस्य एषः इषुधिः । ४ तित्तिरिः आकाशे विचरति । ५ दुन्दुभिः महाशब्दं करोति । ६ कस्य एष दुन्दुभिः अस्ति ? ७ ऋषिः योगबलेन सर्वं जानाति । ८ मुनिः मौनव्रतेन तथैव ज्ञानी भवति । ९ कस्य एष महान् शब्दः ? १० तस्य राज्ञः दुन्दुभेः एष महान् शब्दः अस्ति ।

१ शस्त्रधर वीरने उत्तम युद्ध किया । २ उस सेनापतिका सैनिक यहां दौडता है । ३ उस वीरका यह इषुधि है । ४ त्तित्तिरपक्षी आकाशमें चलता है । ५ ढोल बडा शब्द करता है । ६ किसका यह ढोल है ? ७ ऋषि योग-बलसे सब जानता है । ८ मुनि मौन-व्रतसे वैसा ही ज्ञानी होता है । ९ किसका वह बडा शब्द ? १० उस राजाकी दुन्दुभिका यह बडा शब्द है ।

वाचन--पाठः ।

भगवान् तपस्वी स्वाध्यायशीलः वाल्मीकिः ऋषिःएकदा वनं विचचार । समीपं एव स ऋषिः एकं क्रौञ्चमिथुनं अपश्यत । तस्मात् एकं क्रौञ्चं पापः निषादः जघान । क्रौंचं हतं दृष्ट्वा परमकारुणिकः

ऋषिः अवदत्- "मा निषाद प्रतिष्ठां त्वमगमः शाश्वतीः समाः। यत्क्रौंचमिथुनादेकमवधीः काममोहितम् ॥" अयं श्लोकः तेन महर्षिणा गीतः। स ऋषिः अस्य श्लोकस्य पादं पादं पुनः पुनः अनुव्याहरत्। इमं श्लोकं दृष्ट्वा मुनिः सन्तुष्टः। ईदृशैः श्लोकैः संपूर्णं रामायणं काव्यं करवाणि इति महर्षेः बुद्धिः जाता। वाल्मीकिः ऋषिः तथा एव रामचंद्रस्य चरितं चकार, तत् एव रामायणं अस्ति।

सरयूनदीतीरे कोसलः नाम महान् जनपदः आसीत्। स कोसलः जनपदः धनधान्यसंपन्नः मुदितश्च आसीत्। तस्य कोसलस्य देशस्य महापुरी अयोध्या नगरी राजधानी आसीत्। तां राष्ट्रवर्धनः राजा दशरथः पालयामास। स राजा दीर्घदर्शी महातेजाः जनप्रियः वशी सत्यप्रतिज्ञः च आसीत्। तस्य भूपस्य हितेरताः यशस्विनः अष्टौ अमात्याः बभूवुः। तस्मिन् राष्ट्रे एकः अपि असत्यवादी न आसीत्। नापि दुष्टः पापी वा चौरः वा तत्र कः अपि आसीत्। सर्वं राष्ट्रं प्रशान्तं आनन्दपूर्णं च आसीत्। तत्र सर्वः अपि जनः सुखपूर्णः मुदितः ईश्वरभक्तः च आसीत्।

[पाठकोंको यदि इसके अर्थका संदेह हुआ तो पाठ ७ देखें]

## पाठ १६

इस पाठमें पुनः इकारान्त पुल्लिंग शब्द देते हैं।

| | |
|---|---|
| आधिः = दुःख | राशिः = ढेर |
| उदधिः = समुद्र | ग्रंथिः = ग्रंथि, गाठ |
| अद्रिः = पर्वत | क्रिमिः = कीडा |
| वारिधिः = समुद्र | ध्वनिः = शब्द |
| रश्मिः = किरण | बलिः = कर |
| रविः = सूर्य | मरीचिः = किरण |

### संस्कृत-वाक्यानि

१ स पुरुषः आधिना पीडितः। २ इदानीं उदधिं स्नानाय गच्छ। ३ एष सूर्यस्य रश्मिः। ४ सूर्यस्य एकः रश्मिः सोमं दीपयति। ५ उदधेः जलं स्नानाय शोभनं अस्ति। ६ जनः भूपाय बलिं ददाति। ७ सूर्यस्य मरीचिः प्रकाशं करोति। ८ यथा अद्रौ एषः वृक्षः भवति, तथा वने अपि भवति एव। ९ आकाशात् पर्जन्यः पतति। १० तत् सर्वं जलं समुद्रं गच्छति। ११ तस्य एष ध्वनिः। १२ धान्यस्य राशिं पश्य। १३ स पुरुषः उदधेः जले स्नात्वा अत्र आगच्छति। १४ तस्मै जनाय रक्तं वस्त्रं देहि। १५ अस्य सूत्रस्य एष ग्रंथिः। १६ पर्जन्यस्य जलं अद्रौ पतति। १७ तत् नदीमार्गेण समुद्रं गच्छति। १८ रवेः प्रकाशः आरोग्यं ददाति।



भाषा-वाक्य

१ वह पुरुष दुःखसे पीडित है। २ अब समुद्रके प्रति स्नानके लिये जा। ३ यह सूर्यका किरण है। ४ सूर्यका एक किरण चंद्रको प्रकाशित करता है। ५ समुद्रका जल स्नानके लिये उत्तम है। ६ प्रजाजन राजाको कर देता है। ७ सूर्यका किरण प्रकाश देता है। ८ जैसे पर्वतमें यह वृक्ष होता है वैसे वनमें भी होता ही है। ९ आकाशसे वृष्टि गिरती है। १० वह सब जल समुद्रको जाता है। ११ उसका यह शब्द है। १२ धानका ढेर देख। १३ वह मनुष्य समुद्रके जलमें स्नान करके यहां आता है। १४ उस मनुष्यको लाल वस्त्र दे। १५ इस सूत्रकी यह गांठ है। १६ पर्जन्यका जल पर्वतपर गिरता है। १७ वह नदीके मार्गसे समुद्रको जाता है। १८ सूर्यका प्रकाश आरोग्य देता है।

संधि किये हुए वाक्य।

१स पुरुष आधिना पीडितः॥ इदानीमुदधिं स्नानाय गच्छ। गच्छेदानीमुदधिं स्नानाय। गच्छोदधिमिदानीं स्नानाय।

२ एष सूर्यस्य रश्मिः। रश्मिरेष सूर्यस्य। सूर्यस्यैष रश्मिः। रश्मिः सूर्यस्यैषः।

३ सूर्यस्यैको रश्मिः सोमं दीपयति। सूर्यस्य दीपयत्येको रश्मिः सोमम्। सोमं सूर्यस्यैको रश्मिर्दीपयति।

## पाठ १७

शब्द।

| | |
|---|---|
| गभस्तिः = किरण ✓ | नाभिः = नाभि, मध्य |
| सारथिः = सारथि | प्रजापतिः-प्रजापालक, राजा |
| कुक्षिः = पेट, गर्भाशय ✓ | नृपतिः = राजा |
| श्रोणिः = कमर, पुट्ठा ✓ | भूपतिः = राजा |
| दुन्दुभिः = ढोल | निधिः = खजाना |

संस्कृत--वाक्यानि

१ सारथिः रथं नयति। २ सारथिना रथः नीतः। ३ रथात् सारथिः पतति। ४ तस्य देशस्य भूपतिः अत्र आगतः। ५ नृपतेः निधिं कः जानाति? ६ न जानामि नृपतेः सारथिः कुत्र गतः। ७ यज्ञः भुवनस्य नाभिः। ८ दुन्दुभेः ध्वनिं त्वं शृणोषि किं? ९ कः दुन्दुभेः शब्दं करोति? १० सः पुरुषः नृपतेः निधिं रक्षति। ११ प्रजा--पतिः प्रजां रक्षति। १२ यः प्रजां रक्षति स एव प्रजा-पतिः भवति। १३ प्रजापतिः सैनिकं भ्रामयति। १४ भूपतेः प्रसादात् सः धनं इच्छति। १५ नृपतिः ईश्वरं शरणं गच्छति। १६ नगरात् नगरं साधुः भ्रमति। १७ तव गृहे इदानीं कः अस्ति? १८ तस्य हस्तात् दुन्दुभिः पतितः। १९ यथा सैनिकः धावति तथा त्वं धाव।

भाषा वाक्य।

१ सारथि रथ ले जाता है। २ सारथिने रथ चलाया। ३ रथसे सारथि गिरता है। ४ उस देशका राजा यहां आगया है। ५ राजाका खजाना कौन जानता है? ६ मैं नहीं जानता हूं, राजाका सारथी कहां गया। ७ यज्ञ ही जगत्का नाभि (अर्थात् मध्य) है। ८ ढोलका शब्द तू सुनता है क्या? ९ कौन ढोलका शब्द करता है। १० वह मनुष्य राजाके खजानेका रक्षण करता है। ११ प्रजापति प्रजाका रक्षण करता है। १२ जो प्रजाका रक्षण करता है वही प्रजापति होता है। १३ राजा सिपाहीको घुमाता है। १४ राजाकी कृपासे वह धन चाहता है। १५ राजा ईश्वरको शरण जाता है। १६ (एक) शहरसे (दूसरे) शहरको साधु घूमाता है। १७ तेरे घर अब कौन है? १८ उसके हाथसे ढोल गिर गया। १९ जैसा सिपाही दौडता है वैसा तू दौड।

संधि किये हुए वाक्य

१ सारथी रथं नयति। रथं सारथिर्नयति। सारथिना रथो नीतः। नीतो रथः सारथिना। सारथिना नीतो रथः।

२ तस्य देशस्य भूपतिरत्रागतः। अत्रागतो भूपतिस्तस्य देशस्य। आगतोऽत्र भूपतिर्देशस्य तस्य।

३ नृपतेर्निधिं को जानाति? जानाति को निधिं नृपतेः?

## पाठ १८

इस पाठमें निम्नलिखित श्लोक देखिये—

कुतस्त्वा कश्मलमिदं विषमे समुपस्थितम् ।
अनार्यजुष्टमस्वर्ग्यमकीर्तिकरमर्जुन ॥

( भ० गीता २।२ )

पदानि—कुतः । त्वा । कश्मलं । । इदं । विषमे । सम्+उपस्थितं । अन्+आर्य+जुष्टं । अ+स्वर्ग्यं । अकीर्तिकरं । अर्जुन ॥

अन्वयः— हे अर्जुन ! विषमे अनार्यजुष्टं अस्वर्ग्यं अकीर्तिकरं इदं कश्मलं त्वा कुतः समुपस्थितम ?

अर्थ—हे अर्जुन ! (वि+समे) इस कठिन प्रसंगमें ( अन्+आर्य+जुष्टं) आर्य जिसका सेवन नहीं करते, ( अ+स्वर्ग्यं ) जो स्वर्गको देनेवाला नहीं है, और ( अ+कीर्ति+करं ) जो कीर्तिको बिगाडनेवाला है ऐसा ( इदं ) यह ( कश्मलं ) मोह (त्वा) तेरे पास ( कुतः ) कहांसे ( सं+उपस्थितं ) आगया ?

क्लैब्यं मा स्म गमः पार्थ नैतत्त्वय्युपपद्यते ।
क्षुद्रं हृदयदौर्बल्यं त्यक्त्वोत्तिष्ठ परंतप ।

( भ० गी० २।३ )

पदानि—क्लैब्यं । मा । स्म । गमः । पार्थ । न । एतत् । त्वयि । उपपद्यते । क्षुद्रं । हृदय+दौर्बल्यं । त्यक्त्वा । उत्तिष्ठ । परंतप ॥

अन्वयः—हे पार्थ ! क्लैब्यं मा गमः स्म। एतत् त्वयि न उपपद्यते। परंतप ! क्षुद्रं हृदयदौर्बल्यं त्यक्त्वा उत्तिष्ठ ॥

अर्थ—हे (पार्थ) अर्जुन ! (क्लैब्यं) क्लीवत्व अर्थात् दुर्बलताके पास (मा) मत (गमः) जा। (एतत्) यह (त्वयि) तुझमें (न उपपद्यते) ठीक नहीं जँचता। हे (परंतप) शत्रुको ताप देनेवाले अर्जुन ! इस क्षुद्र हृदयकी दुर्बलताको (त्यक्त्वा) छोडकर (उत्तिष्ठ) उठ।

देहिनोऽस्मिन्यथा देहे कौमारं यौवनं जरा।
तथा देहान्तरप्राप्तिर्धीरस्तत्र न मुह्यति ॥

(भ. गी. २।१३)

पदानि—देहिनः। अस्मिन्। यथा। देहे। कौमारं। यौवनं। जरा। तथा। देह+अंतर+प्राप्तिः। धीरः। तत्र। न। मुह्यति ॥

अन्वयः—यथा अस्मिन् देहे देहिनः कौमारं यौवनं जरा तथा देहान्तरप्राप्तिः। तत्र धीरः न मुह्यति ॥

अर्थ—(यथा) जिस प्रकार (अस्मिन्) इस देहमें (देहिनः) देहधारी मनुष्यको (कौमारं) कुमार अवस्था, यौवन अवस्था और (जरा) वृद्ध अवस्था [प्राप्त होती] तथा (देह+अन्तर+प्राप्तिः) दूसरे देहकी प्राप्ति होती है, इसलिये (तत्र) उसमें (धीरः) धैर्यशाली पुरुष (न मुह्यति) शोक नहीं करता।

## पाठ १९

अविनाशि तु तद्विद्धि येन सर्वमिदं ततम्।
विनाशमव्ययस्यास्य न कश्चित्कर्तुमर्हति ॥
( भ० गी० २।१७ )

पदानि—अ+विनाशि । तु । तद् । विद्धि । येन । सर्वं । इदं । ततं । वि-नाशं । अ+व्ययस्य । अस्य । न । कः । चित् । कर्तुम् । अर्हति ॥

अन्वयः—येन इदं सर्वं ततं, तद् तु अविनाशि विद्धि । अस्य अव्ययस्य विनाशं कश्चित् कर्तुं न अर्हति ॥

अर्थ—जिसने ( इदं ) यह सब ( ततं ) फैलाया है ( तद् ) वह ( तु ) निश्चयसे अविनाशी ( है ऐसा ) (विद्धि) जान । इस ( अव्ययस्य ) अविनाशीका विनाश ( कः चित् अपि ) कोई भी कर नहीं ( अर्हति ) सकता।

वासांसि जीर्णानि यथा विहाय
नवानि गृह्णाति नरोऽपराणि ॥
तथा शरीराणि विहाय जीर्णा-
न्यन्यानि संयाति नवानि देही ॥
( भ० गी० २।२२ )

पदानि—वासांसि । जीर्णानि । यथा । विहाय । नवानि । गृह्णाति । नरः । अपराणि । तथा । शरीराणि । विहाय । जीर्णानि । अन्यानि । संयाति । नवानि । देही ॥

अन्वयः--यथा जीर्णानि वासांसि विहाय नरः अपराणि नवानि गृह्णाति। तथा देही जीर्णानि शरीराणि विहाय अन्यानि नवानि संयाति ॥

अर्थ--जिस प्रकार जीर्ण ( वासांसि ) वस्त्रोंको ( विहाय ) फेंक कर ( नरः ) मनुष्य ( अपराणि ) दूसरे ( नवानि ) नये ( गृह्णाति ) लेता है उसी प्रकार ( देही ) शरीर धारण करनेवाला जीर्ण शरीर फेंककर अन्य नये ( संयाति ) प्राप्त करता है।

इतने श्लोक जिस समय आप पढ चुकेंगे उसके पश्चात् आप केवल श्लोकोंको ही कई वार पढिये और देखिये कि विना अन्वयादि पढे उक्त श्लोक आपके समझमें आते हैं या नहीं।

तथा स्वयं दूसरेकी सहायताके विना ही आप श्लोकोंके पद तथा अन्वय बनाइये और कोई अशुद्धि तो नहीं होती इसकी परीक्षा देखिये।

यदि आप स्वयं पद और अन्वय बनायेंगे तो आपकी प्रगति बहुत हो चुकी है ऐसा निश्चयसे सिद्ध होगा।

संधि किये हुए वाक्य।

येनेदं सर्वं ततं,तत्त्वविनाशि विद्धि। अस्याऽव्ययस्य विनाशं कश्चिदपि कर्तुं नार्हति। यथा जीर्णानि वासांसि विहाय, नरोऽपराणि नवानि गृह्णाति, तथा देही जीर्णानि शरीराणि विहायान्यानि नवानि संयाति।

## पाठ २०

यदि पिछले पाठ आपके ठीक हो चुके हैं, तो निम्नलिखित *वाक्य आप बिना आयास समझ सकते हैं—*

संस्कृत-वाचन-पाठः ।

हे पार्थ ! त्वं क्लैब्यं मा गमः स्म । एतत् त्वयि न उपपद्यते । क्षुद्र हृदयदौर्बल्यं त्यक्त्वा उत्तिष्ठ ।

हे मनुष्य ! क्षुद्र कुविचार त्यक्त्वा शीघ्रं सुविचारं कुरु । हे मनुष्यश्रेष्ठ ! अस्वर्ग्यं अकीर्तिकरं कर्म त्यक्त्वा स्वर्ग्यं कीर्तिकरं कर्म एव कुरु । हे अर्जुन ! त्वं आर्यजुष्ट कर्म न करोषि, अपि तु अनार्यजुष्टं कर्म एव करोषि । एतत् अकीर्तिकर अस्ति । अस्मिन् विषमे समये कश्मलं त्वा कुतः उपस्थितम् ?

अस्मिन् समये स्वहितस्य घातक कर्म कथं करोषि ? तेन तव अकीर्तिः एव भविष्यति ।

हे मनुष्य ! त्व दौर्बल्यं न गच्छ । एतत् न योग्यम् । अतः शीघ्रं दौर्बल्यं त्यक्त्वा शोभनाय प्रयत्नाय उत्तिष्ठ ।

मनुष्यः देहे कौमारं यौवनं जरां च प्राप्नोति । तथा तस्य देहान्तरप्राप्तिः अपि भवति एव । अतः तत्र धीरः न मुह्यति ।

यथा दिने प्रातःकालः मध्याह्नकालः सायंसमयः च भवति, तथा एव शरीरे कौमारसमयः यौवनसमयः जरासमयः च भवति। एष शरीरस्य धर्मः एव अस्ति। तत्र सुखं किं दुःखं वा किम्? येन इदं सर्वं जगत् कृतं तत् अविनाशि ब्रह्म अस्ति। येन इदं सर्वं जगत् रचितं स ईश्वरः एव अस्ति। तस्य कदापि नाशः न भवति, अतः तस्य नाम "अव्ययः" इति भवति।

येन सर्वं पुस्तकं रचितं, सः भट्टभास्करः अत्र आगतः, तस्य लेखस्य कः अपि विद्वान् खंडनं कर्तुं समर्थः न भवति।

यथा मनुष्यः जीर्णानि वासांसि त्यक्त्वा नवानि वासांसि गृह्णाति, तथा एव जीवः जीर्णानि शरीराणि विहाय नवानि अपराणि शरीराणि गृह्णाति। एवं मनुष्यस्य पुनर्जन्म भवति।

मनुष्यः जीर्णं गृहं त्यक्त्वा नवीनं गृहं प्राप्नोति तथा एव पुरुषः जीर्णं वस्त्रं विहाय नवीनं वस्त्रं प्राप्नोति। यथा पुत्रः जीर्णं पुस्तकं विहाय नवीनं पुस्तकं पठति तथा त्वं अपि पुराणं शस्त्रं त्यक्त्वा नवीनं एव गृहाण। तथा तेन एव युद्धं कुरु।

## पाठ २१

### संस्कृत-वाचन-पाठः।

हे भरतश्रेष्ठ ! त्वं प्रथमं इन्द्रियाणि नियम्य पापं विचारं प्रजाहि। एष पापः विचारः ज्ञानस्य नाशकः विज्ञानस्य अपि विनाशकः अस्ति।

वेदान् अधीत्य मनुष्यः गृहस्थाश्रमं आवसेत्। वेदस्य अध्ययनं न कृत्वा गृहस्थाश्रमं न आवसेत्। स्नानं कृत्वा एव भोजनं कर्तव्यम्।

के नराः स्वर्गं गच्छन्ति ? ये मनुष्याः परस्त्री-विषये मातृवत् स्वसृवत् पुत्रीवत् च वर्तन्ते एते मानवाः स्वर्गगामिनः भवन्ति।

यः मनुष्यः धर्मं रक्षति तं धर्मः रक्षति एव। स एव मनुष्यः इह कीर्तिं अवाप्नोति प्रेत्य च उत्तमं सुखं प्राप्नोति।

ये मनुष्याः भिन्नाः वर्तन्ते तेषां पथ्यं उक्तं न स्वदते। तेषां योगक्षेमं नैव कल्पते। विनाशात् अन्यत् भिन्नानां मनुष्याणां परायणं किंचित् अपि न विद्यते।

तस्मिन् एव आश्रमे देवर्षिः तपः करोति। सः इदानीं मौनव्रतः अस्ति। अतः किंचित् अपि न वदति।

कोसलस्य देशस्य कः नृपतिः अस्ति ? कोसलदेशस्य भूपतिः दशरथः अस्ति । तस्य कः पुत्रः ? तस्य रामचंद्रः इति एकः पुत्रः अस्ति । तस्य अन्यः कः पुत्रः ? तस्य दशरथनृपस्य अन्यः पुत्रः लक्ष्मणः इति अस्ति । किं तस्य अन्यः कः अपि पुत्रः अस्ति ? तस्य दशरथनृपस्य अन्यः पुत्रः भरतः इति अस्ति । शत्रुघ्नः अपि तस्य एव पुत्रः अस्ति ।

तस्य राष्ट्रे कोसले देशे सर्वः जनः सुखयुक्तः अस्ति । यः धार्मिकः राजा अस्ति, तस्य राष्ट्रे जनः सुखयुक्तः भवति एव । अतः धर्मः एव सुखदायकः अस्ति ।

सूचना ।

यदि आप यह पाठ नहीं समझ सकेंगे तो पिछले पाठ आपको पुनः देखने चाहिये । परंतु यदि आप यह पाठ पूर्णतासे समझ गये हैं, तो आप आगे बढ सकते हैं । यह एक प्रकारकी परीक्षा ही है । पिछले पाठ ठीक होनेपर इस पाठमें आपको कोई कठिनता प्रतीत नहीं होगी ।

संधि किये हुए वाक्य

## पाठ २२

उकारान्त पुल्लिंग शब्दके रूप निम्नप्रकार बनते हैं—

| | |
|---|---|
| १ भानुः—सूर्य | ४ भानवे—सूर्यके लिये |
| ( हे भानो ) ! ( हे ) सूर्य | ५ भानोः—सूर्यसे |
| २ भानुं—सूर्यको | ६ ,, सूर्यका |
| ३ भानुना—सूर्यने | ७ भानौ—सूर्यमें |

इस रीतिसे उकारान्त पुल्लिंग शब्दके रूप होते हैं। उकारान्त पुलिंग शब्द ये हैं।

| | |
|---|---|
| गुरुः = अध्यापक | हनुः = ठोढी |
| मृत्युः = मरण | साधुः = साधु |
| जन्तुः = प्राणी | भिक्षुः = भिक्षु, भीख मांगने-वाला |
| क्रतुः = यज्ञ, कर्म | पशुः = पशु |
| अक्रतुः = यज्ञ न करनेवाला | तन्तुः = धागा |
| विष्णुः = व्यापक ईश्वर | चरुः = अन्न, पके चावल |
| बाहुः = बाहु | ऋतुः = ऋतु |

संस्कृत वाक्यानि।

१ मित्र ! त्वं कुत्र गच्छसि ? २ अहं इदानीं गुरोः गृहं गच्छामि। ३ तव गुरुः किं अध्यापयति ? ४ मम गुरुः मां व्याकरणं अध्यापयति। ५ इदं फलं कुत्र नयसि? ६ इदं फलं गुरवे दास्यामि। ७ सर्वः जन्तुः मृत्युं प्राप्नोति

एव। ८ भिक्षुः गृहात् गृहं भिक्षार्थं भ्रमति। ९ उपदेशकः ग्रामात् ग्रामं उपदेशार्थं भ्रमति। १० एषः वसन्त-ऋतुः अस्ति। ११ अस्मिन् वसन्ते ऋतौ पुष्पं फलं च भवति। १२ त्वं कं क्रतुं कर्तुं इच्छसि ? १३ अहं राजसूयं कर्तुं इच्छामि। १४ व्यापकः ईश्वरः विष्णुः इति उच्यते। १५ साधुः विष्णुं एव ध्यायति। १६ तन्तुना वस्त्रं भवति। १७ तन्तोः अन्यत् किं भवति ? १८ तन्तोः रज्जुः भवति।

भाषा-वाक्य

१ हे मित्र ! तू कहां जाता है ? २ मैं अब गुरुके घर जाता हूं। ३ तेरा गुरु क्या पढाता है ? ४ मेरा गुरु मुझे व्याकरण पढाता है। ५ यह फल तू कहां ले जाता है ? ६ यह फल गुरुको दूंगा। ७ सब प्राणी मरणको प्राप्त होता ही है। ८ भिक्षु एक घरसे दूसरे घर भिक्षाके लिये घूमता है। ९ उपदेशक एक ग्रामसे दूसरे ग्रामको उपदेशके लिये घूमता है। १० यह वसंत ऋतु है। ११ इस वसंत ऋतुमें फूल और फल होता है। १२ तू कौनसा यज्ञ करना चाहता है ? १३ मैं राजसूय यज्ञ करना चाहता हूं। १४ व्यापक ईश्वरको विष्णु ऐसा कहते हैं। १५ साधु विष्णुका ही ध्यान करता है। १६ धागेसे वस्त्र होता है। १७ धागेसे दूसरा क्या होता है ? १८ धागेसे डोर बनता है।

## पाठ २३

१ अक्रतुः मनुष्यः साधुः न भवति । २ अग्निना अहं चरुं पचामि । ३ क्रतोः फलं किं भवति ? ४ क्षत्रियस्य बाहुः बलयुक्तः भवति । ५ विद्याविहीनः मनुष्यः द्विपाद् पशुः एव भवति । ६ विद्यासम्पन्नः मनुष्यः एव मनुष्यः भवति । ७ चरुं कस्मै दास्यसि ? ८ अहं चरुं तस्मै दास्यामि । ९ कार्पासस्य एषः तन्तुः अस्ति । १० कः अपि जन्तुः क्षणं अपि अकर्मकृत् न तिष्ठति । ११ अक्रतोः मनुष्यस्य जीवनं अपि व्यर्थम् । १२ यथा मनुष्ये जीवः अस्ति, तथा पशौ अपि जीवः अस्ति । १३ गुरुः पूज्यः भवति । १४ गुरुणा सह अहं गच्छामि । १५ साधुः अपि भिक्षुः भवति ।

१ कर्म न करनेवाला मनुष्य साधु नहीं होता है । २ अग्निसे मैं अन्न पकाता हूं । ३ यज्ञका फल क्या होता है ? ४ क्षत्रियका बाहु बलवान् होता है । ५ विद्यारहित मनुष्य दो पांववाला पशु ही होता है । ६ विद्यासम्पन्न मनुष्य ही मनुष्य होता है । ७ अन्न तू किसको देगा ? ८ मैं अन्न उसको दूंगा । ९ कपासका यह धागा है । १० कोई भी प्राणी क्षणभर भी कर्म न करते हुए नहीं ठहरता । ११ कर्म न करनेवाले मनुष्यका जीवन भी व्यर्थ है । १२ जैसा

मनुष्यमें जीव है, वैसा पशुमें भी जीव है। १३ गुरु पूज्य होता है। १४ गुरुके साथ मैं जाता हूं। १५ साधु ही भिक्षु होता है।

संधि किये हुए वाक्य।

१ अक्रतुर्मनुष्यः साधुर्न भवति। न साधुर्भवत्य-क्रतुर्मनुष्यः। न भवति साधुरक्रतुर्मनुष्यः।

२ अग्निनाऽहं चरुं पचामि। पचाम्यहं चरुमग्निना। चरुमहमग्निना पचामि। अहमग्निना चरुं पचामि।

३ क्रतोः फलं किं भवति? क्रतोर्भवति किं फलम्?

४ क्षत्रियस्य बाहुर्बलयुक्तो भवति। बलयुक्तो बाहुर्भवति क्षत्रियस्य। बाहुर्भवति बलयुक्तः क्षत्रियस्य।

५ विद्यासंपन्नो मनुष्य एव मनुष्यो भवति। विद्यासंपन्न एव मनुष्यो मनुष्यो भवति।

६ कार्पासस्यैष तन्तुरस्ति। एष तन्तुः कार्पास-स्यास्ति। एष कार्पासस्य तन्तुरस्ति।

७ कोऽपि जन्तुः क्षणमप्यकर्मकृन्न तिष्ठति। न तिष्ठति कोऽपि जन्तुरकर्मकृत् क्षणमपि। क्षणमप्य-कर्मकृन्न कोऽपि जन्तुस्तिष्ठति।

८ अक्रतोर्मनुष्यस्य जीवनमपि व्यर्थम्। व्यर्थं जीवनमप्यक्रतोर्मनुष्यस्य।

## पाठ २४

उकारान्त पुल्लिंग शब्द इस पाठमें स्मरण कीजिये—

| | |
|---|---|
| प्रभुः = मालिक, ईश्वर | वायुः = वायु, हवा |
| इक्षुः = ईख | भानुः = सूर्य |
| मेरुः = मेरुपर्वत | बिंदुः = बिंदु |
| सेतुः = पुल, सेतु | इषुः = बाण |
| सक्तुः = सत्तु | स्तनयित्नुः = मेघ |

संस्कृत-वाक्यानि ।

१ गृहस्य प्रभुः गृहस्थः । २ राष्ट्रस्य प्रभुः नृपतिः । ३ विश्वस्य प्रभुः विष्णुः अस्ति । ४ सः सक्तुं तितउना पुनाति । ५ वस्त्रेण घृतं सः पुनाति । ६ सत्येन मनः शुध्यति । ७ अहं सक्तुं खादामि । ८ इक्षोः मधुरः रसः भवति । ९ भानोः प्रकाशः प्रखरः भवति । १० रामेण इषुणा रावणः हतः । ११ स्तनयित्नुः आकाशे गर्जति । १२ जन्तोः शरीरे वायुः एव प्राणः भवति । १३ चातकः जलबिन्दुः इच्छति । १४ सक्तुः बलप्रदः अस्ति । १५ यदा सक्तुः इक्षोः रसेन सह भक्षितः भवति, तदा एव सः बलप्रदः भवति । १६ आकाशात् वृष्टिः बिन्दुरूपेण भवति । १७ तत्र शोभनः सेतुः अस्ति ।

भाषा-वाक्य

१ घरका स्वामी गृहस्थ है। २ राष्ट्रका ईश राजा है। ३ विश्वका प्रभु विष्णु है। ४ वह सत्तुको छाननीसे शुद्ध करता है। ५ कपडेसे घी वह शुद्ध करता है। ६ सत्यसे मन शुद्ध होता है। ७ मैं सत्तु खाता हूं। ८ ईखका मीठा रस होता है। ९ सूर्यका प्रकाश प्रखर होता है। १० रामने बाणसे रावण मारा। ११ मेघ आकाशमें गरजता है। १२ प्राणीके शरीरमें वायु ही प्राण होता है। १३ चातक पक्षी जलबिन्दु चाहता है। १४ सत्तु बल देनेवाला है। १५ जब सत्तु ईखके रसके साथ खाया जाता है, तब वह बल देनेवाला होता है। १६ आकाशसे वृष्टि बिंदुरूपसे होती है। १७ वहां उत्तम पुल है।

संधि किये हुए वाक्य।

१ गृहस्य प्रभुर्गृहस्थोऽस्ति। अस्ति गृहस्थो गृहस्य प्रभुः। प्रभुर्गृहस्यास्ति गृहस्थः।

२ राष्ट्रस्य प्रभुर्नृपतिरेवास्ति। नृपतिरेव प्रभू राष्ट्रस्यास्ति। राष्ट्रस्य नृपतिरेव प्रभुरस्ति।

३ विश्वस्य प्रभुर्विष्णुरस्ति। विष्णुरस्ति प्रभुर्विश्वस्य। प्रभूर्विश्वस्य विष्णुरस्ति।

४ रामेणेषुणा रावणो हतः। हतो रावणो रामेणेषुणा। इषुणा रावणो रामेण हतः।

## पाठ २५

अब उकारान्त विशेषण दिये जाते हैं। उनके रूप पूर्वोक्त प्रकार ही होते हैं, अब ये शब्द उकारान्त पुल्लिंग शब्दोंका गुण बताते हैं—

| | |
|---|---|
| भीरु = डरपोक | वर्धिष्णु = बढनेवाला |
| श्रद्धालु = श्रद्धा रखनेवाला | सहिष्णु = सहन करनेवाला |
| निद्रालु = सोनेवाला | भूष्णु = होनेवाला |
| पटु = कुशल | प्रभविष्णु = बलवान्, मुख्य |

संस्कृत-वाक्यानि ।

१ भीरुः मनुष्यः यशस्वी न भवति। २ भीरुणा पुरुषेण किं कर्तव्यम् ? ३ पटुः जनः एव सर्वं कर्म करोति । ४ वर्धिष्णुः नृपः साम्राज्यं प्राप्नोति । ५ प्रभविष्णुना नृपतिना राज्यं संवर्धितम् । ६ भीरुणा भूपतिना सर्वं राज्यं त्यक्तम् । ७ धर्मस्य तत्त्वं तस्य गुरुः एव जानाति । ८ विष्टरं अत्र आनय । ९ शूरः नृपः विजयं एव कांक्षति । १० भीरुः नृपः पलायनं करोति । ११ यस्य अर्थे युद्धं कृतं स एव भीरुः । १२ सः नृपतिः राज्यं धनं प्राणं च त्यक्त्वा युद्धे अवस्थितः। १३ आचार्यं गुरुं वा निहत्य पातकं भवति। १४ स्वबान्धवं हन्तुं त्वं न योग्यः। १५ पापेन निषादेन मृगः हतः ।

भाषा—वाक्य

१ डरपोक मनुष्य यशस्वी नहीं होता। २ भीरु पुरुष ने क्या करना ? ३ कुशल मनुष्य ही सब कर्म करता है। ४ बढनेवाला राजा साम्राज्य प्राप्त करता है। ५ बलवान् राजाने राज्य बढाया। ६ भीरु राजाने सब राज्य छोडा। ७ धर्मका तत्त्व उसका गुरु ही जानता है। ८ कुर्सी यहां ला। ९ शूर राजा विजय ही चाहता है। १० डरपोक राजा भागना करता है। ११ जिसके लिये युद्ध किया वही डरपोक है। १२ वह राजा राज्य, धन और प्राण छोडकर युद्धमें उपस्थित है। १३ आचार्य वा गुरुका हनन करके पाप होता है। १४ अपने भाईको मारनेके लिये तू योग्य नहीं है। १५ पापी निषादने मृगका हनन किया।

संधि किये हुए वाक्य।

१ भीरुर्मनुष्यो यशस्वी न भवति। न भवति यशस्वी भीरुमनुष्यः।

२ पटुर्जन एव सर्वं कर्म करोति। करोति सर्वं कर्म पटुर्मनुष्यः। सर्वं कर्म पटुरेव मनुष्यः करोति।

३ भीरुर्नृपः पलायनं करोति। करोति पलायनं भीरुर्नृपः। पलायनं करोति भीरुर्नृपः।

## पाठ २६

अब इस पाठमें निम्नलिखित श्लोक पढिये–

स्वधर्ममपि चावेक्ष्य न विकंपितुमर्हसि।
धर्म्याद्धि युद्धाच्छ्रेयोऽन्यत्क्षत्रियस्य न विद्यते।

पदानि—स्व+धर्मं। अपि। च। अवेक्ष्य। न। वि+कंपितुं। अर्हसि। धर्म्यात्। हि। युद्धात्। श्रेयः। अन्यत्। क्षत्रियस्य। न। विद्यते॥ ( भ. गीता. २।३१ )

अन्वयः— अपि च स्वधर्मं अवेक्ष्य विकंपितुं न अर्हसि। हि क्षत्रियस्य धर्म्यात् युद्धात् अन्यत् श्रेयः न विद्यते।

अर्थ—और अपने धर्मको ( अवेक्ष्य ) देखकर ( वि+कंपितुं ) कांपनेके लिये ( न अर्हसि ) तू योग्य नहीं है। ( हि ) क्योंकि क्षत्रियके लिये धर्मयुद्धसे भिन्न ( श्रेयः ) कल्याणकारी और कुछ भी ( न विद्यते ) नहीं है।

यदृच्छया चोपपन्नं स्वर्गद्वारमपावृतम्।
सुखिनः क्षत्रियाः पार्थ लभन्ते युद्धमीदृशम्॥
( भ. गीता. २।३२ )

पदानि-यदृच्छया। च। उपपन्नं। स्वर्ग+द्वारं। अपावृतं सुखिनः। क्षत्रियाः। पार्थ। लभन्ते। युद्धं। ईदृशम्॥

अर्थ—हे ( पार्थ ) पृथाके पुत्र अर्जुन ! ( यदृच्छया ) बिना प्रयत्न ( उपपन्नं ) प्राप्त और ( अपावृतं ) खुला

हुआ स्वर्गका द्वार ( ईदृशं ) ऐसा युद्ध ( सुखिनः ) आनंदित क्षत्रियोंको मिला करता है ।

अथ चेत्त्वमिमं धर्म्यं संग्रामं न करिष्यसि ।
ततः स्वधर्मं कीर्तिं च हित्वा पापमवाप्स्यसि ॥
( भ. गीता ४।३३ )

पदानि–अथ । चेत् । त्वं । इमं । धर्म्यं । संग्रामं । न । करिष्यसि । ततः । स्वधर्मं । कीर्तिं । च । हित्वा । पापं । अवाप्स्यसि ॥

अर्थ–( अथ चेत् ) और यदि तू इस धर्मरूप ( संग्रामं ) युद्धको नहीं करेगा (ततः) तो स्वधर्म और कीर्तिका (हित्वा) त्याग करके पाप ही ( अवाप्स्यसि ) बटोरेगा ।

अकीर्तिं चापि भूतानि कथयिष्यन्ति तेऽव्ययाम् ।
संभावितस्य चाकीर्तिर्मरणादतिरिच्यते ॥

पदानि–अ+कीर्तिं । च । अपि । भूतानि । कथयिष्यन्ति । ते । अव्ययाम् । संभावितस्य । च । अकीर्तिः । मरणात् । अतिरिच्यते ॥ ( भ. गीता २।३४ )

अन्वयः–भूतानि ते अव्ययां अकीर्तिं च अपि कथयिष्यन्ति । संभावितस्य च अकीर्तिः मरणात् अतिरिच्यते ॥

अर्थ—( भूतानि ) मनुष्य तेरी ( अव्ययां ) अक्षय अकीर्ति ही ( कथयिष्यन्ति ) कहते रहेंगे । और संभावित पुरुषके लिये दुष्कीर्ति मरणसे भी बढकर होती है ।

## पाठ २७

भयाद्रणादुपरतं मंस्यन्ते त्वां महारथाः ।
येषां च त्वं बहुमतो भूत्वा यास्यसि लाघवम् ॥
( भ. गीता. २।३१ )

पदानि-भयात् । रणात् । उपरतं । मंस्यन्ते । त्वां । महारथाः। येषां । च । त्वं । बहुमतः । भूत्वा । यास्यसि । लाघवम् ॥

अन्वयः—महारथाः त्वां भयात् रणात् उपरतं मंस्यन्ते। त्वं येषां बहुमतः भूत्वा लाघवं यास्यसि ।

अर्थ— महारथी तुझे भयके कारण ( रणात् ) युद्धसे भागा हुआ ( मंस्यन्ते ) मानेंगे और ( येषां ) जिन्हें तू इस समय ( बहुमतः ) बहुमान्य है, उनके ही मनमें तू ( लाघवं यास्यसि ) छोटा बन जायगा ।

हतो वा प्राप्स्यसि स्वर्गं जित्वा वा भोक्ष्यसे महीम्।
तस्मादुत्तिष्ठ कौंतेय युद्धाय कृतनिश्चयः ।
( भ. गीता- २।३७ )

पदानि-हतः । वा । प्राप्स्यसि । स्वर्गं । जित्वा । वा । भोक्ष्यसे । महीम् । तस्मात् । उत्तिष्ठ । कौंतेय । युद्धाय । कृत+निश्चयः ।

अन्वयः- हतः वा स्वर्गं प्राप्स्यसि, जित्वा वा महीं भोक्ष्यसे । हे कौंतेय ! तस्मात् युद्धाय कृतनिश्चयः उत्तिष्ठ ॥

अर्थ– ( हतः ) मर गया तो स्वर्गको ( प्राप्स्यसि ) प्राप्त होगा और (जित्वा) जीत गया तो पृथ्वी (भोक्ष्यसे) भोगेगा। हे ( कौंतेय ) अर्जुन! इसलिये युद्धका निश्चय करके ( उत्तिष्ठ ) उठ ॥

इस समयतक जितने श्लोक आगये हैं, उतने क्रमसे कम दस बार पढिये। अथवा उतनी बार पढिये कि जितनी बार पढनेसे पढते ही अर्थ ध्यानमें आ जायगा।

यदि आप श्लोक शनैः– शनैः पढेंगे, तो सुगमतासे आपके ध्यानमें अर्थ आ जायगा।

तथा प्रत्येक श्लोकके पद, अन्वय और अर्थ स्वयं करनेका भी साथ साथ अभ्यास कीजिये।

संधि किये हुए वाक्य।

१ महारथास्त्वां भयाद्रणादुपरतं मंस्यन्ते। मंस्यन्ते त्वां रणाद्भयादुपरतं महारथाः। रणाद्भयादुपरतं मंस्यन्ते त्वां महारथाः।

२ त्वं येषां बहुमतो भूत्वा लाघवं यास्यसि। येषां त्वं बहुमतो भूत्वा लाघवं यास्यसि।

३ हतो वा स्वर्गं प्राप्स्यसि। जित्वा वा महीं भोक्ष्यसे। कौन्तेय! तस्माद्युद्धाय कृतनिश्चय उत्तिष्ठ।

## पाठ २८

### संस्कृत-वाचन-पाठः।

१ तव पुत्र इदानीं कुत्र गतः? तं त्वमधुना पश्यसि किम्? केन स इदानीं नीतः? कुत्र नीतः? त्वं जानासि किम्?

२ कदा स आगमिष्यति? केन सह स आगमिष्यति? तस्मात् स्थानात् केन सह कदा स पुनरागमिष्यति?

३ कथं तस्मिन्पङ्के स वृषभः पतितः? स वृषभस्तस्मिन्पंके केन वा पातितः? कथं स तत्र गतः?

४ मम मञ्चकोऽत्र नास्ति। केन स अत्रैव नीतः? किमर्थं मम मंचकस्तेन नीतः?

५ अस्य गृहस्यैव भागो ममैवास्ति। ममैवास्त्यस्य गृहस्यैव भागः। अस्य गृहस्यान्यो भागः कस्यास्ति?

६ पुत्रेण फलं नानीतम्। किमर्थं तेन पुत्रेण फलं नानीतम्? अद्य न तेन पुत्रेण फलमानीतम्।

७ तस्य मंचकस्य समीपमेव विष्टरोऽस्ति। केन रक्षितो विष्टरस्तस्य मंचकस्य समीपम्। मया तस्य मंचकस्य समीपमेव विष्टरो रक्षितः।

८ कृष्णदुर्गो विजयदुर्गस्य समीपमेवास्ति। अहं विजयदुर्गस्य मार्गं जानामि। कृष्णदुर्गस्य मार्गं न जानामि। त्वं जानासि किम्?

९ लङ्कानगरे रावणः राज्यं करोति। तेन रावणेन किं कृतम्? रामेण किमर्थं तस्य वधः कृतः?

१० रामेण बाणेन रावणस्य वधः कृतः। रावणो राक्षसोऽस्ति। राक्षसो दुष्टो भवति। दुष्टः पुरुषः पीडको भवति।

११ यथा व्याघ्रो वने भवति तथा अश्वो ग्रामे भवति। तथा गृहे बिडालोऽपि भवति।

१२ हस्ते भूषणं भवति। मुखेऽन्नं भवति। वृक्षे फलं भवति। दीपे प्रकाशो भवति। सूर्ये प्रभा भवति। समुद्रे जलं भवति।

१३ साहसे श्रीर्भवति। ब्राह्मणे विद्या भवति। क्षत्रिये शौर्यं भवति।

१४ तव द्वारपालेन मम पुस्तकं न नीतम्। तत् पुस्तकं तस्य द्वारपालेनाद्य नीतम्। कदा नीतम्? इदानीमेव नीतम्।

१५ वीरं आरोहत्यश्वम्। क्षत्रियो गजमारोहति। स पुरुषो गजं नारोहति, नापि स अश्वमारोहति।

## पाठ २९

१ वैद्यो वत्साय ददाति रसम्। बालको रसं न पिबति। त्वमिदानीं तत्र गच्छ यत्र स बालकोऽस्ति।

२ मूषकोऽन्नं खादति। न मूषकोऽन्नं खादति, परंतु बिडालो मोदकं भक्षयति। अद्य तस्मिन् गृहे मूषको नास्ति, परन्तु तत्र बिडालोऽस्ति।

३ येनान्नं खादितं स नैव बिडालः। स कोऽपि अन्योऽस्ति। येन बिडालेन मूषको भक्षितः स इदानीं कुत्र गतः?

४ इदानीं लेखको लेखनार्थं किं नागच्छति? यदा स आगच्छति तदा त्वं कुत्र गच्छसि? लेखक आगच्छति परन्तु लेखनं न करोति।

५ त्वया अद्योत्तमः पाकः कृतः। नहि नहि, स पाको मया न कृतः, परन्तु मम मित्रेण हरिदत्तेन कृतः।

६ गोवत्सः किमर्थं धावति? तमत्रानय। यथा स अत्रैव तिष्ठति तथा कुरु। येन मार्गेण स अत्रागच्छति, तेनैव मार्गेण तमानयात्र।

७ स पुरुषो बालकं न रक्षति। स उत्तमः पुरुषः शोभनं बालकमपि न रक्षति। किमर्थं स एवं करोति?

कुत्र स गच्छति ? किमर्थं स तत्र न गच्छति ?

८ यदा वीरो युद्धं प्रति गच्छति तदा शस्त्रास्त्रेण सह गच्छति; तथा त्वमपि गच्छ । स्वधर्मस्य रक्षणार्थं युद्धं कुरु । मनुष्येण रक्षितो धर्मो मनुष्यमेव रक्षति ।

९ मम अत्रैव निवासोऽस्ति, अस्मिन् स्थाने तिष्ठामि, अस्मिन् स्थाने पठामि, अस्मिन् स्थाने भोजनं करोमि, तस्मिन् स्थाने स्नानं करोमि ।

१० यथा त्वं जानासि तथा वद । कदापि असत्यं न वद । सत्यस्यैव वचनं श्रेयस्करं भवति, यदत्यन्तं भूतहितं तदेव सत्यमिति शास्त्रस्य सिद्धान्तोऽस्ति ।

११ यद्यत् परवशं तत्तत्सर्वं दुःखमेव भवति । यद्यत्स्ववशं तत्तत्सर्वं सुखकरं भवति । एतदेव सुखदुःखलक्षणमस्ति ।

१२ यन्त्रकारः कुत्र चक्रं भ्रामयति ? यत्र विश्वमित्रोऽस्ति तत्र स चक्रं भ्रामयति । यदा स चक्रं भ्रामयति तदा सोऽन्यः पुरुषस्तत्र किं करोति ?

१३ कस्मान्नगरात्स पुरुषोऽत्रागतः ? यदि स काशीनगरादेवागतस्तर्हि तेन सह भाषणं कर्तुमिच्छामि ।

१४ यदा त्वं नदीतीरं स्नानाय गमिष्यसि तदा वस्त्रं पात्रं च तत्र नय ।

## पाठ ३०

इस पाठमें निम्नलिखित श्लोक पढ़िये—

वरं वृणीष्व भद्रं ते यादृशं पुत्रमीप्सितम् ।
तथोक्तः प्राञ्जली राजा पुत्रं वव्रे गुणान्वितम् ॥
( महाभारत द्रोणपर्व ५५।२२ )

पदानि–वरं । वृणीष्व । भद्रं । ते । यादृशं । पुत्रं । ईप्सितं । तथा+उक्तः । प्र+अञ्जलिः । राजा । पुत्रं । वव्रे । गुण+आन्वितम् ।

अन्वयः—वरं वृणीष्व । ते भद्रं । यादृशं पुत्रं ईप्सितं । तथोक्तः राजा प्राञ्जलिः गुणान्वितं पुत्रं वव्रे ।

अर्थ–( वरं ) वर (वृणीष्व) मांग । ( ते ) तेरा ( भद्रं ) कल्याण हो । ( यादृशं ) जैसा ( पुत्रं ) पुत्र ( ईप्सितं ) इष्ट है वैसा मांग । ( तथोक्तः ) वैसा कहा गया राजा ( प्राञ्जलिः ) हाथ जोडकर ( गुणान्वितं ) गुणयुक्त पुत्रको ( वव्रे ) मांगने लगा ।

भावार्थ—तुम्हें जैसा पुत्र चाहिये वैसा वर मांग, तेरा कल्याण हो, ऐसा कहा जानेपर राजाने अपने लिये जैसा चाहिये वैसा गुणी पुत्र मांग लिया ।

यशस्विनं कीर्तिमन्तं तेजस्विनमरिन्दमम् ।
यस्य मूत्रं पुरीषं च क्लेदः स्वेदश्च काञ्चनम् ॥२॥

पदानि-यशस्विनं । कीर्तिमन्तं । तेजस्विनं । अरिन्दमं । यस्य । मूत्रं । पुरीषं । च । क्लेदः । स्वेदः । च । काञ्चनम् ।

अन्वयः—यशस्विनं कीर्तिमन्तं तेजस्विनं अरिन्दमम् । यस्य मूत्रं पुरीषं च क्लेदः स्वेदः च काञ्चनम् ।

अर्थ—( उसने ऐसा पुत्र मांगा कि जो ) यशस्वी, कीर्तिमान्, तेजस्वी और ( अरिन्दमं ) शत्रुको दबानेवाला हो । तथा ( यस्य ) जिसका ( मूत्रं ) मूत्र और ( पुरीषं ) विष्ठा तथा जिसका ( क्लेदः ) मल और ( स्वेदः ) पसीना ये सब ( सुवर्ण ) ही हो ।

भावार्थ—उसने ऐसा पुत्र मांगा कि जिसका मल, मूत्र, विष्ठा और पसीना अर्थात् जिसके शरीरके सब मल सुवर्ण-ही होता था । तथा जो यशस्वी कीर्तिमान् तेजस्वी और शत्रुको जीतनेवाला था ।

संधि किये हुए वाक्य

१ यथा जनकः कुमारं पश्यति, तथा कुमारो जनकं पश्यति किम् ? इदानीं कुमारो जनकं पश्यति । पश्य तम, स तं कथं पश्यति ।

२ यथा त्वं धावसि, तथाऽहमपि धावामि । यथा स धावति, तथा त्वं न धावसि । यथाऽहं धावामि, तथा त्वं धावसि ।

अंक ४



# संस्कृत-पाठ-माला।

(संस्कृत-भाषाका अध्ययन करनेका सुगम उपाय)

## चतुर्थ भागः।

लेखक

पं. श्रीपाद दामोदर सातवळेकर,

स्वाध्याय-मंडल, किल्ला-पारडी, (जि० सूरत)

प्रथम वार

संवत् २००९, शके १८७४, सन् १९५२

मूल्य ८ आने।

# विशेष सूचना

संस्कृतमें संधिविचारका महत्त्व विशेष है। इस संधिप्रकरणको अति सुबोध रीतिसे इस पुस्तकमें दिया है। इनके नियम ध्यानमें रखनेसे संधिके साथ पाठकोंका परिचय हो जायगा।

इस पुस्तकमें संस्कृत गद्य, तथा श्लोकोंके पाठ दिये हैं। उनका अभ्यास करनेसे पाठक संस्कृतमें अति शीघ्र प्रविष्ट हो सकते हैं।

संधि खोलकर पाठ प्रथम दिये हैं और उनकाही संधि बनाकर सरल संस्कृत पीछेसे दिया है। दोनोंकी तुलना करनेसे पाठकोंको बडा लाभ पहुंच सकता है। आशा है कि पाठक इस शैलीसे अभ्यास करके लाभ उठायेंगे।

---

स्वाध्याय-मण्डल
' आनंदाश्रम '
पारडी ( जि० सूरत )

लेखक
पं. श्रीपाद दामोदर सातवळेकर
अध्यक्ष— स्वाध्याय-मण्डल

मुद्रक और प्रकाशक- व० श्री० सातवळेकर, बी. ए.
भारत-मुद्रणालय, पारडी ( जि. सूरत )

ॐ

# संस्कृत-पाठ-माला

## चतुर्थ भागः ।

### पाठ १

#### संधि-विचार

संस्कृतमें संधिविचार प्रथम स्थान रखता है। इस समय जो वाक्य पाठकोंको दिये हैं, वे विना संधिके दिये हैं। अब इस पाठमें कुछ संधिके नियम बताये जायेंगे। इन नियमों-को यदि पाठक थोडा थोडा ध्यानमें रखेंगे, तो उनको संधियोंका बहुतसा ज्ञान हो जायगा।

संधियोंमें स्वरसंधि और व्यञ्जनसंधि ऐसे दो भाग हैं। दो स्वरोंके जो संधि होते हैं, उनको स्वरसंधि कहते हैं और दो व्यञ्जनोंके जो संधि होते हैं, उनको व्यञ्जनसंधि कहते हैं। व्यञ्जन और स्वरोंका भी संधि होताही है। इनका स्वरूप अब थोडी देरमें पाठकोंके सामने आ जायगा।

स्वर

ह्रस्व स्वर— अ, इ, उ, ऋ, ऌ

दीर्घस्वर–आ, ई, ऊ, ॠ [ ऌ कारको दीर्घ नहीं है। ]
संयुक्त स्वर– ए, ऐ, ओ, औ।
अनुस्वार— अं ( ं )
विसर्ग– अः ( ः )

व्यञ्जन।

कठोर व्यञ्जन– क ख। च छ। ट ठ। त थ। प फ।
मृदु व्यञ्जन–ग घ ङ। ज झ ञ। ड ढ ण। द ध न।
ब भ म। य र ल व। ह।
उष्म वर्ण– श ष स ह।

वर्णोंके ये साधारण संकेत पाठक ध्यानमें रखें, इनका उपयोग संधि करनेके समय बहुत है।

दो वर्ण एक दूसरेके साथ मिलनेका नाम संधि है।

जैसा— किम् अस्ति = किमस्ति
तत् अस्ति = तदस्ति
न अस्ति = नास्ति

साधारण पाठक भी इन संधियोंको थोडेसे विचारसे जान सकते हैं। थोडेसे संधि ऐसे हैं कि जो समझमें आनेके लिये कठिन होते हैं, परंतु अन्य संधि बडे सुगम होते हैं।

( १ ) सवर्ण दीर्घ संधि

अ, इ, उ, ऋ इनके सम्मुख क्रमशः येही वर्ण आ जाँय तो

दोनोंके स्थानपर इनकाही दीर्घ वर्ण हो जाता है। जैसा--

| | |
|---|---|
| अ+आ = आ | आ+अ = आ |
| आ+आ = आ | अ+आ = आ |

इसी प्रकार निम्नलिखित संधि होते हैं--

| | |
|---|---|
| इ+इ = ई | ई+ई = ई |
| उ+उ = ऊ | ऊ+ऊ = ऊ |

अब इनके उदाहरण देखिये--

| | |
|---|---|
| न+अपि --नापि | नास्ति+इति--नास्तीति। |
| रमा+अपि--रमापि | नदी+ईशः--नदीशः |
| तथा+आसीत्--तथासीत् | भानु+उदयः-भानूदयः |
| न+आसीत्--नासीत् | तनू+उद्भवः-- तनूद्भवः |

ये स्वरोंके संधि स्थान स्थानपर आते हैं। इस पुस्तकमें आगे वाक्यही दिये जायेंगे, जिनमें संधि हुए हैं। जितने श्लोक दिये हैं, उनमेंसे प्रत्येक श्लोकमें कई संधि पाठक देख सकते हैं।

## ( २ ) नियम दूसरा

इ, उ, ऋ, लृ के सम्मुख विजातीय स्वर आनेसे इसके स्थानपर क्रमशः य्, व्, र्, ल् हो जाते हैं।

इस नियमके उदाहरण ये हैं--

| | |
|---|---|
| इ+अ = य | इ+आ = या |
| उ+अ = व | उ+आ = वा |
| ऋ+अ = र | ऋ+आ = रा |

अब इनके संधि शब्दोंमें देखिये–

| | |
|---|---|
| इति+आदि–इत्यादि | आदि+अन्तः- आद्यन्तः |
| नास्ति+अतः–नास्त्यतः | कैकेयी+आत्मजः - कैकेय्यात्मजः |
| भानु+अस्तः--भान्वस्तः | पितृ+आज्ञा– पित्राज्ञा |
| नदी+आत्मा--नद्यात्मा | अति+आशा--अत्याशा |
| मनु+आदि--मन्वादि | |

पाठक इन संधियोंको स्मरणमें रखें और जहां जहां दो स्वर सम्मुख आ जायँ, वहां वहां उनका संधि करनेका यत्न करें।

तथा जहां जहां संधि हुए हों, वहां वहां उन संधियोंको खोलनेका यत्न करें।

इस प्रकार अभ्यास करनेसे संधिनियमोंके साथ पाठकों का परिचय निःसंदेह हो जायगा।

संस्कृत--वाक्यानि।

१. स तत्र नास्त्यतः त्वं तत्र न गच्छ।
२. कैकेय्यात्मजेन किं कृतम्?
३. रामेण पित्राज्ञा पालिता।

---

## पाठ २

### संस्कृत-वाक्यानि

१ प्रभावशालिनः महात्मनः धर्मज्ञस्य राज्ञः दशरथस्य वंशकरः सुतः नासीत् । २ पुत्रार्थं चिन्तयतः तस्य दशरथस्य "पुत्रकामेष्टिनाम्ना यज्ञेन यजामि" इति बुद्धिः सञ्जाता । ३ मन्त्रिवरं सुमन्त्रं आहूय राजा इदं अब्रवीत् । ४ सपुरोहितान् गुरून् शीघ्रं अत्र आनय । ५ आनीतान् तान् पूजयित्वा धर्मात्मा राजा इदं वचनं अब्रवीत् । ६ सुतार्थं तप्यमानस्य मम सुखं नास्ति, तदर्थं पुत्रकामेष्टिनामकः यज्ञः कर्तव्यः इति मे मतिः सञ्जाता ।

### भाषा-वाक्य

१ प्रभावशाली महात्मा धर्म जाननेवाले राजा दशरथको वंश बढानेवाला पुत्र नहीं था । २ पुत्रके लिये चिन्ता करनेवाले उस दशरथको 'पुत्रकामेष्टि नामक यज्ञ करूं,' ऐसी बुद्धि हुई । ३ मंत्रियोंमें श्रेष्ठ सुमन्त्र प्रधानको बुलाकर राजा यह बोला । ४ 'पुरोहितोंके साथ गुरुओंको शीघ्र यहां ला ।' ५ आये हुए उनकी पूजा कर, धर्मात्मा राजा यह भाषण बोला । ६ 'पुत्रके लिये तडपनेवाले मुझे सुख नहीं, इसलिये पुत्रकामेष्टि यज्ञ करना चाहिये, ऐसी मेरी बुद्धि हो गई है ।'

## संस्कृत—वाक्यानि

७ तत् वचनं श्रुत्वा वसिष्ठप्रमुखाः सर्वे अपि द्विजाः ऋष्यशृंगं पुरस्कृत्य तं यज्ञं समारभन्। ८ तस्य यज्ञस्य अन्ते राजा दशरथः ऋष्यशृंगं अब्रवीत्। ९ 'कुलस्य वर्धनाय पुत्रकामेष्टिं कर्तुं अर्हसि।' १० स तथा इति उक्त्वा अथर्ववेदमंत्रैः पुत्रीयां इष्टिं अकरोत्। ११ तस्मात् यज्ञात् सन्तानोत्पत्तिकरः पायसः राजा प्राप्तः। १२ प्रीतः राजा पायसं गृहीत्वा अन्तःपुरं प्रविश्य कौसल्यां अब्रवीत्। १३ पुत्रीयं पायसं गृहाण इति।

### भाषा-वाक्य।

७ वह भाषण सुनकर वसिष्ठादि सब द्विजोंने ऋष्यशृंगको आगे करके उस यज्ञका आरंभ किया। ८ उस यज्ञके अंतमें राजा दशरथ ऋष्यशृंगसे बोला। ९ 'कुलके वर्धनके लिये पुत्रकामेष्टि करनेके लिये तू योग्य है'। १० वह (तथा) ठीक है, ऐसा कहकर अथर्ववेद-मंत्रोंसे पुत्र देनेवाली इष्टिको करने लगा। ११ उस यज्ञसे संतति करनेवाला पायस राजाने प्राप्त किया। १२ आनंदित राजा पायस लेकर अन्तःपुरमें प्रवेश कर कौसल्यासे बोला। १३ 'पुत्र देनेवाला पायस लो'।

हुआ। २० जब पुत्र शुभगुणोंसे युक्त, सर्वज्ञ, दीर्घदर्शी और यशस्वी हो गये, तब उनको देखकर उनका पिता दशरथ ( हृष्टः ) संतुष्ट हुआ।

इस पाठमें रामायणकी कथा संक्षेपसे दी है। पाठसमाप्ति-के पश्चात् केवल संस्कृत-वाक्यही दस बीस वार पाठक पढें। वारंवार पढनेसे ये वाक्य पाठकोंके ध्यानमें रहेंगे।

तत्पश्चात् अपने स्मरणसेही ये वाक्य बोलनेका यत्न कीजिये अथवा किसीसे संस्कृतमेंही कहिये। यदि पाठक ऐसा अभ्यास करेंगे, तो उनको संस्कृतका बोध अतिशीघ्र हो जायगा। रामायणकी कथाका प्रारंभ तृतीय मासमेंही हुआ है, वह पाठ भी इसके साथही फिर पढिये।

संधि किये हुए वाक्य

प्रभावशालिनो महात्मनो धर्मज्ञस्य राज्ञो दशरथस्य वंशकरः सुतो नासीत्। पुत्रार्थं चिन्तयमानस्य तस्य दशरथस्य "पुत्रकामेष्टिनाम्ना यज्ञेन यजामीति" बुद्धिस्समजायत। मन्त्रिवरं सुमन्त्रमाहूय राजेदमब्रवीत्। सपुरोहितान्गुरूञ्छीघ्रमत्रानय। आनीतांस्तान्पूजयित्वा धर्मात्मा राजेदं वचनमब्रवीत्। सुतार्थं तप्यमानस्य मम सुखं नास्ति, तदर्थं पुत्रकामेष्टिनामको यज्ञः कर्तव्य इति मे मतिः सञ्जाता।

## पाठ ३

ततोऽगच्छन्महाबाहुरेकोऽमात्यान्विसृज्य तान् ।
नापश्यच्चाश्रमे तस्मिंस्तमृषिं संशितव्रतम् ॥१॥
( महाभारत आदि० अ० ७१ )

पदानि-ततः । अगच्छत् । महा-बाहुः। एकः। आमात्यान् । विसृज्य । तान् । न । अपश्यत् । च । आश्रमे । तस्मिन् । तं । ऋषिं । संशित-व्रतम् ॥

अन्वयः-ततः तान् अमात्यान् विसृज्य, एकः महाबाहुः अगच्छत् । तस्मिन् आश्रमे संशितव्रतं तं ऋषिं न अपश्यत् ॥

अर्थ-पश्चात् उन मंत्रियोंको छोड, अकेला ( महाबाहुः ) बडे बाहुवाला (दुष्यन्त) गया । उस आश्रममें संयतव्रतवाले उस ऋषिको उसने नहीं देखा।

सोऽपश्यमानस्तमृषिं शून्यं दृष्ट्वा तथाऽऽश्रमम् ।
उवाच क इहेत्युच्चैर्वनं सन्नादयन्निव ॥ २ ॥

पदानि-सः । अपश्यमानः । तं । ऋषिं । शून्यं । दृष्ट्वा । तथा । आश्रमम् । उवाच । कः । इह । इति । उच्चैः । वनं । संनादयन् । इव ॥

अन्वयः-सः तं ऋषिं अपश्यमानः तथा आश्रमं शून्यं दृष्ट्वा 'कः इह' इति उच्चैः वनं संनादयन् इव, उवाच ॥

अर्थ–वह उस ऋषिको न देखता हुआ, तथा आश्रमको ( शून्यं ) सूना पाकर, " कौन यहां है ? " ऐसा ऊंचे स्वरसे, वनको प्रतिध्वनित करता हुआ, बोला ॥

श्रुत्वाऽथ तस्य तं शब्दं कन्या श्रीरिव रूपिणी।
निश्चक्रामाश्रमात्तस्मात्तापसीवेषधारिणी ॥ ३ ॥

पदानि–श्रुत्वा। अथ। तस्य। तं। शब्दं। कन्या। श्रीः। इव। रूपिणी। निश्चक्राम। आश्रमात्। तस्मात्। तापसी-वेष–धारिणी ॥

अन्वयः–अथ तस्य तं शब्दं श्रुत्वा, श्रीः इव रूपिणी तापसी–वेष–धारिणी कन्या तस्मात् आश्रमात् निश्चक्राम ॥

अर्थ–अब उसका वह शब्द सुनकर लक्ष्मी जैसी सुंदर रूपवाली, तापसीका वेष धारण करनेवाली कन्या उस आश्रमसे निकल आयी।

सा तं दृष्ट्वैव राजानं दुष्यन्तमसितेक्षणा।
स्वागतं त इति क्षिप्रमुवाच प्रतिपूज्य च ॥ ४ ॥

पदानि–सा। तं। दृष्ट्वा एव। राजानं। दुष्यन्तं। असित-ईक्षणा। स्वागतं। ते। इति। क्षिप्रं। उवाच। प्रतिपूज्य। च।

अन्वयः– सा असित–ईक्षणा तं राजानं दुष्यन्तं दृष्ट्वा एव 'स्वागतं ते' इति क्षिप्रं प्रतिपूज्य च उवाच॥

अर्थ--वह ( असित-ईक्षणा ) काले नेत्रवाली कुमारिका उस राजा दुष्यन्तको देखकर ही " तेरा स्वागत है " ऐसा शीघ्र ( प्रतिपूज्य ) आदर करके बोली ॥

आसनेनार्चयित्वा च पाद्येनार्घ्येण चैव हि।
पप्रच्छानामयं राजन्कुशलं च नराधिपम् ॥ ५ ॥

पदानि--आसनेन । अर्चयित्वा । च । पाद्येन । अर्घ्येण । च । एव । हि । पप्रच्छ । अनामयं । राजन् । कुशलं । च । नर-अधिपम् ॥

अन्वयः-- हे राजन् ! आसनेन पाद्येन अर्घ्येण च नराधिपं अर्चयित्वा अनामयं कुशलं च प्रपच्छ ॥

अर्थ-- हे राजा ! आसन, पाद्य और अर्घ्यसे राजाको ( अर्चयित्वा ) पूजकर स्वास्थ्य और कुशल पूछा ॥

यथावदर्चयित्वाऽथ पृष्ट्वा चानामयं तदा ।
उवाच स्मयमानेव किं कार्यं क्रियतामिति ॥ ६ ॥

पदानि-- यथावत् । अर्चयित्वा । अथ । पृष्ट्वा च । अनामयं । तदा । उवाच । स्मयमाना । इव । किं । कार्यं । क्रियतां । इति ।

अन्वयः--अथ यथावत् अर्चयित्वा, तदा अनामयं पृष्ट्वा ' किं कार्यं क्रियतां ' इति स्मयमाना इव उवाच ॥

अर्थ- अब ( यथावत् ) विधिपूर्वक पूजकर, तब (अनामयं) कुशल पूछकर, 'क्या कार्य करना ?' ऐसा हास्यमुखसे पूछा ।

तामब्रवीत्ततो राजा कन्यां मधुरभाषिणीम् ।
दृष्ट्वा चैवानवद्याङ्गीं यथावत्प्रतिपूजितः ॥ ७ ॥

पदानि- तां । अब्रवीत् । ततः । राजा । कन्यां । मधुर-भाषिणीं । दृष्ट्वा । च । एव । अनवद्य-अङ्गीं । यथावत् । प्रति-पूजितः ॥

अन्वयः- ततः यथावत् प्रतिपूजितः राजा तां मधुर-भाषिणीं अनवद्याङ्गीं कन्यां दृष्ट्वा एव अब्रवीत् ॥

अर्थ—पश्चात् यथायोग्य पूजा पाकर राजा उस मधुर-भाषिणी अनिंदित अंगवाली कन्याको देखकरही बोला ।

यह पाठ समाप्त करतेही पाठक केवल श्लोकही श्लोक पुनः पुनः पढें । शनैः शनैः ऐसे स्वरसे पढें कि पढतेही उनके मनमें अर्थ आजाय और अर्थके विषयमें कोई संदेह न रहे ।

तथा श्लोकके पद कैसे बनते हैं, पदोंसे अन्वय किस रीतिसे होता है, यह सब ध्यानपूर्वक देखते रहें । इस अभ्याससे शीघ्रही संस्कृतमें गति होती है ।

---

## पाठ ४

पूर्वपाठमें दिया हुआ रामायणका भाग संधि बनाकर यहां दिया जाता है। पढनेसे पाठकोंको स्वयं पता लग जायगा कि संधि कैसे होते हैं और उनको खोलकर पद कैसे बनाने चाहिये। देखिये—

### संधि किए हुए वाक्य

प्रभावशालिनो महात्मनो धर्मज्ञस्य राज्ञो दशरथस्य वंशकरः सुतो नासीत्। पुत्रार्थं चिन्तयतस्तस्य दशरथस्य पुत्रकामेष्टिनाम्ना यज्ञेन यजामीति बुद्धिस्सञ्जाता। मंत्रिवरं सुमंत्रमाहूय राजेदमब्रवीत्। सपुरोहितान्गुरूञ्छीघ्रमत्रानय। आनीतांस्तान् पूजयित्वा धर्मात्मा राजेदं वचनमब्रवीत्। सुतार्थं तप्यमानस्य मम सुखं नास्ति! तदर्थं पुत्रकामेष्टिनामको यज्ञः कर्तव्य इति मे मतिः सञ्जाता। तद्वचनं श्रुत्वा वसिष्ठप्रमुखाः सर्वेऽपि द्विजा ऋष्यशृङ्गं पुरस्कृत्य तं यज्ञं समारभन्। तस्य यज्ञस्यान्ते राजा दशरथ ऋष्यशृंगमब्रवीत्। कुलस्य वर्धनाय पुत्रकामेष्टिं कर्तुमर्हसि। स तथेत्युक्त्वाऽथर्ववेदमंत्रैः पुत्रीयामिष्टिमकरोत्। तस्माद्यज्ञात्सन्तानोत्पत्तिकरः पायसो राज्ञा प्राप्तः। प्रीतो राजा पायसं गृहीत्वाऽन्तः-

पुरं प्रविश्य कौसल्यामब्रवीत् । पुत्रीयं पायसं गृहीत्वेति । पायसस्यार्धभागं कौसल्यायै, चतुर्थभागं सुमित्रायै, अवशिष्टं कैकेय्यै पुत्रार्थं प्रददौ । ततस्ता राजस्त्रियो गर्भान्प्रतिपेदिरे । अनन्तरं चैत्रे मासे नवम्यां तिथौ कौसल्या रामं पुत्रमजनयत् । कैकेयी भरतं, सुमित्रा लक्ष्मणं, शत्रुघ्नं चाजनयत् । एषां पुत्राणां जन्मसमये अयोध्यायां महानुत्सव आसीत् लक्ष्मणो रामस्य प्रियकरस्तथा शत्रुघ्नो भरतस्यानुगाम्यभवत् । यदा सर्वे पुत्राः शुभगुणैः समुदिता सर्वज्ञा दीर्घदर्शिनो यशस्विनोऽभवस्तदा तान्दृष्ट्वा तेषां पिता दशरथो हृष्ट आसीत् ।

पाठक यह सरल संस्कृत वारवार पढें और समझनेका यत्न करें । किसी स्थानपर यदि ठीक समझमें न आया, तो समझनेका प्रयत्न करें । न समझनेपर पूर्व पाठमें यह वाक्य देखें । ऐसा प्रयत्न करनेसे संस्कृतके संधियोंके साथ पाठकोंका परिचय होगा । विना आयास संधि करने और संधि खोलनेका अभ्यास इसी प्रकार होता जायगा । संस्कृतमें संधियोंका सर्वत्र महत्त्व है । इसलिये संधिप्रकरणका अभ्यास सुगम रीतिसे करनेका यही उपाय है ।

अब श्लोकोंका सरल संस्कृत नीचे दिया जाता है । पूर्व पाठके श्लोकोंका सरल संस्कृत यह है । इसमें किसी स्थान-

पर यदि कोई कठिनता उत्पन्न हो गई तो पूर्व पाठमें देखनेसे वह दूर होगी।

संधि किये हुए वाक्य।

ततस्तानमात्यान्विसृज्यैको महाबाहुरगच्छत्। तस्मिन्नाश्रमे संशितव्रतं तमृषिं नापश्यत्। स तमृषिमपश्यमानस्तथाऽऽश्रमं शून्यं दृष्ट्वा "क इह" इत्युच्चैर्वनं सन्नादयन्निवोवाच। अथ तस्य तं शब्दं श्रुत्वा श्रीरिव रूपिणी तापसी वेषधारिणी कन्या तस्मादाश्रमान्निश्चक्राम। साऽसितेक्षणा तं राजानं दुष्यन्तं दृष्ट्वैव "स्वागतं त" इति क्षिप्रं प्रतिपूज्य चोवाच—

हे राजन्! आसनेन पाद्येनार्घ्येण चैव हि नराधिपमर्चयित्वाऽनामयं कुशलं च पप्रच्छ। अथ यथावदर्चयित्वा,तदाऽनामयं पृष्ट्वा च, 'किं कार्यं क्रियतां' इति स्मयमानेवोवाच।

ततो यथावत्प्रतिपूजितो राजा तां मधुरभाषिणीमनवद्याङ्गीं कन्यां दृष्ट्वैवाब्रवीत्।

पूर्व पाठके श्लोकोंका सरल संस्कृत यह है। पाठक इसको पढ़ें और समझनेका यत्न करें। जहां समझनेमें कठिनता हो, वहां पूर्व श्लोकोंके अन्वयमें देखकर शंकाकी निवृत्ति करें॥

अब उक्त वाक्योंकेही शब्दोंका हेरफेर करके वाक्य बनाकर नीचे दिये जाते हैं। इन वाक्योंमें कुछ शब्द अधिक भी हैं, कुछ कम भी किये हैं और शब्दोंके स्थान भी बदल दिये हैं।

अनन्तरममात्यान्दूरतो विसृज्य दुष्यन्तो राजा कण्वस्याश्रममगच्छत्। परं तस्मिन्नाश्रमे स राजा कण्वं मुनिं नापश्यत्। तं मुनिमपश्यमानः स राजा 'क इहास्ति।' इत्युच्चैर्वनं संनादयन्निवोवाच।

तस्य शब्दं श्रुत्वा तापसी कन्या तस्मादाश्रमान्निश्चक्राम। सा कन्या तं राजानं ज्ञात्वा "स्वागतं ते" इति संपूज्य चोवाच।

आसनेन पाद्येनार्घ्येण च तं नृपतिमर्चयित्वा कुशलं च पृष्ट्वा "किं कार्यं कर्तव्यम्" इति स्मयमानोवाच।

तथा पूजितो राजा मधुरभाषिणीं तां कन्यामिदमब्रवीत्।

पाठक पूर्ववत् इसको भी समझनेका यत्न करें। इसमें जो शब्दोंकी न्यूनाधिकता है, वह थोडेसे प्रयत्नसे पाठक समझ सकते हैं। इसी प्रकार यदि पाठक अपने मनसे वाक्य बनाते जायेंगे, तो उनको बडाही लाभ हो सकता है।

## पाठ ५

इस पाठमें संधिके नियम बताये जाते हैं।

### ( ३ ) तृतीय नियम।

ए ऐ ओ औ इन स्वरोंके सम्मुख अन्य स्वर आनेसे उनके स्थानपर क्रमशः अय्, आय्, अव्, आव् होते हैं। उदाहरण-

| | |
|---|---|
| ए+अ = अय | ओ+अ = अव |
| ऐ+आ = आय | औ+आ = आव |
| हरे+ए = हरये | विष्णो+ए = विष्णवे |
| नै+अकः = नायकः | पौ+अकः = पावकः |

### ( ४ ) चतुर्थ नियम।

अ वर्णके सम्मुख इ उ ये स्वर आनेसे दोनोंके मिलकर क्रमशः ए और ओ होते हैं।

भय+उत्पादक = भयोत्पादक
गंगा+उदक = गंगोदक
जल+ईशः = जलेशः
गंगा+ईशः = गंगेशः

### ( ५ ) पञ्चम नियम।

पदान्तके अन्तिम ए अथवा ओ के परे अकार आनेसे उस अकारका लोप हो जाता है, अर्थात् यह अकार पूर्वाक्षरमें मिल जाता है।

जहां जहां अकार इस प्रकार मिल जाता है, वहां ऽ यह चिह्न लिखते हैं। जैसे—

जले अन्तर्हितः = जलेऽन्तर्हितः।

रामो अब्रवीत् = रामोऽब्रवीत्।

(६) षष्ठ नियम।

अकारके पश्चात्के विसर्गके सम्मुख पुनः अकार अथवा मृदु व्यञ्जन आनेसे उस विसर्गका ओ बनता है। और इसमें आगेका अकार मिल जाता है। जैसा—

रामः + अब्रवीत् = रामोऽब्रवीत्।

जनः + अस्ति = जनोऽस्ति।

मनुष्यः + गच्छति = मनुष्यो गच्छति।

अश्वः + मृतः = अश्वो मृतः।

(७) सप्तम नियम।

इ अथवा उ के पश्चात्के विसर्गके सम्मुख स्वर अथवा मृदु व्यञ्जन आनेसे विसर्गका रकार (रेफ) बनता है। जैसे—

हरिः+अस्ति = हरिरस्ति।

गुरुः+अब्रवीत् = गुरुरब्रवीत्।

भानुः+गच्छति = भानुर्गच्छति

कविः+जानाति = कविर्जानाति।

मृदु व्यञ्जन न होनेसे विसर्गका रेफ नहीं होता, इसके भी उदाहरण देखिये—

हरिः करोति = हरिः करोति। गुरुः पुनाति। गुरुः पुनाति।

इसमें विसर्गके सम्मुख कठोर व्यञ्जन होनेसे विसर्ग वैसाका वैसाही रह गया है।

( ८ ) अष्टम नियम।

विसर्गके सम्मुख च, छ आनेसे विसर्गका श् बनता है।

रामः+चलति = रामश्चलति।

जनः+छेदयति = जनश्छेदयति।

( ९ ) नवम नियम।

विसर्गके सम्मुख त अथवा थ वर्ण आनेसे विसर्गका स् बनता है। जैसा—

माधवः+तथा = माधवस्तथा।

रामः+थूर्वति = रामस्थूर्वति।

( १० ) दशम नियम।

विसर्गके सम्मुख ट अथवा ठ आनेसे विसर्गका ष् बनता है।

कृष्णः+टीकते = कृष्णष्टीकते।

( ११ ) एकादश नियम।

विसर्गके सम्मुख श, ष, स, ये अक्षर आनेसे विसर्गके क्रमसे श्, ष्, स् बनते हैं अथवा विसर्गही कायम रहता है।

रामः+शास्ति = रामश्शास्ति, रामः शास्ति।

जनः+ष्ठीवति, = जनष्ष्ठीवति, जनः ष्ठीवति।

नरः+सहते = नरस्सहते, नरः सहते।

पाठक ये नियम अपने पाठोंमें देखें और किसी नियमके अनुकूल कौनसा संधि कहां हुआ है, यह जाननेका यत्न करें।

यह कार्य वडा सुगम है। यदि पाठक ध्यानपूर्वक संधिके स्थानपर देखेंगे और ध्यानसे सोचेंगे, तो इसमें कोई कठिनता उनको प्रतीत नहीं होगी।

संधि किये हुए वाक्य।

महाबाहुर्दुष्यन्तो राजा तदा तत्रागच्छत्। दुष्यन्तो नाम महाबाहू राजा तदाऽगच्छत्तत्र। महाबाहू राजा दुष्यन्तो नामागच्छत्तत्र तदा। अगच्छत्तदा तत्र दुष्यन्तो नाम महाबाहू राजा। तत्र स राजा संशितव्रतं कण्वं नाम महर्षिं तत्राश्रमे नापश्यत्। नापश्यत्तत्राश्रमे स राजा कण्वं नाम संशितव्रतं महर्षिम्।

ततो राजा तां मधुरभाषिणीं कन्यामब्रवीत्। राजा ततस्तां मधुरभाषिणीं कन्यामब्रवीत्। राजा ततो मधुरभाषिणीं तां कन्यामब्रवीत्। ततो मधुरभाषिणीं तां कन्यां राजाऽब्रवीत्। अब्रवीद्राजा ततस्तां मधुरभाषिणीं कन्याम्। मधुरभाषिणीं तां कन्यां ततो राजाऽब्रवीत्।

## पाठ ६

### संस्कृत-वाक्यानि ।

१ अथ राजा दशरथः तेषां पुत्राणां दारक्रियां चिन्तयामास। २ तदा तत्र महामुनिः विश्वामित्रः अभ्यागच्छत् । ३ हृष्टमनाः राजा तं मुनिं अभिपूजयन् उवाच। ४ 'महामुने! त्वया अनुगृहीतः अस्मि। ५ यत भवतां कार्यं अस्ति, तत् अशेषेण एव करिष्यामि। ६ भवान् हि दैवतं मम। ७ तदा आनंदितः विश्वामित्रः अभ्यभाषत। ८ अहं एकं क्रतुं कर्तुं इच्छामि, तस्य रक्षणार्थं ज्येष्ठं स्वपुत्रं रामं दातुं अर्हसि। ९ मम यज्ञस्य विघ्नकर्तारौ मारीचसुबाहू नाम राक्षसौ स्तः।

### भाषा-वाक्यानि ।

१ अब राजा दशरथ उन पुत्रोंकी ( दारक्रिया ) शादीके विषयमें सोचने लगा। २ तब वहां महामुनि विश्वामित्र आगया। ३ संतुष्ट राजा उस मुनिकी पूजा करके बोला। ४ 'हे महामुने! तेरे कारण मैं अनुगृहीत हुआ हूं। ५ जो आपका कार्य है वह पूर्णतासे ही करूंगा। ६ क्योंकि (भवान्) आप मेरा दैवत हैं।' ७ उस समय आनंदित विश्वामित्र बोलने लगा। ८ 'मैं एक यज्ञ करना चाहता हूं, उसके रक्षणके लिये अपने ज्येष्ठ पुत्र रामको देनेके लिये योग्य है। ९ मेरे यज्ञके विघ्नकर्ता मारीच और सुबाहु नामक राक्षस हैं।'

संस्कृत-वाक्यानि ।

१० 'तव पुत्रः हि दिव्येन स्वेन तेजसा राक्षसानां विनाशने समर्थः अस्ति । ११ यज्ञस्य रक्षणार्थं केवलं दशरात्रं एव कमललोचनं रामं दातुं अर्हसि ।१२ अहं रामाय च बहुविधं श्रेयः दास्यामि ।' १३ एतत् मुनेः वचनं श्रुत्वा राजा निःसंज्ञः अभवत् । १४ ' मे रामः ऊनषोडशवर्षः, राक्षसानां न योग्यः । १५ राक्षसाः कूटयुद्धाः भवन्ति । १६ अहं तु रामेण वियुक्तः मुहूर्तं अपि जीवितुं न उत्सहे । १७ कालोपमौ मारीच-सुबाहू । १८ तत्र दास्यामि पुत्रकम् ।'१९राज्ञः इदं वचनं श्रुत्वा क्रुद्धः विश्वामित्रः प्रत्युवाच । २० ' हे राजन् ! स्वकीयां प्रतिज्ञां हातुं इच्छसि, अयुक्तं एतत् रघु-कुलस्य ।२१ गच्छामि अहं विमुखः।' २२तदा ऋषिणा वसिष्ठेन अपि मन्त्रितः राजा दशरथः सलक्ष्मणं रामं कौशिकाय विश्वामित्राय ददौ । २३ तदा रामलक्ष्मणौ धनुष्पाणी विश्वामित्रं अनुजग्मतुः ।

भाषा-वाक्य ।

-१०'तेरा पुत्र अपने दिव्य तेजसे राक्षसोंका नाश करनेमें समर्थ है । ११ यज्ञकी रक्षाके लिये केवल दस रात्रितक ही कमलनेत्र रामको देनेके लिये तू योग्य है । १२ मैं रामके लिये अनेक प्रकारका कल्याण दूंगा ।' १३ यह मुनिका वचन

सुनकर राजा मूर्च्छित हुआ। १४ 'मेरा राम सोलह वर्षोंसे कम आयुवाला है,राक्षसोंके लिये योग्य नहीं है। १५ राक्षस कपटयुद्ध करनेवाले होते हैं। १६ मैं तो रामसे विरहित घडीभर भी जीवित रहनेके लिये उत्साहित नहीं हूं। १७ कालके समान मारीच और सुबाहू हैं। १८ इसलिये नहीं दूंगा पुत्रको।' १९ राजाका यह वचन सुनकर क्रोधित विश्वामित्र बोला। २० 'हे राजा! अपनी प्रतिज्ञाका त्याग करना चाहता है, यह रघुकुलके लिये योग्य नहीं है। २१ जाता हूं मैं विमुख होकर।' २२ तब ऋषि वसिष्ठकी मंत्रणासे राजा दशरथने लक्ष्मणसहित रामको कुशिकवंशज विश्वामित्रको दिया। २३ तब राम और लक्ष्मण हाथमें धनुष्य् लेते हुए विश्वामित्रके पीछे चले।

रामायणका पहिला पाठ तृतीय पुस्तकमें है और इस पुस्तकमें दो पाठ हैं। सब मिलकर तीन पाठ आपने इस समयतक पढे हैं।

कृपया आजके दिन उक्त तीनों पाठ पुनः पढिये और ऐसा यत्न कीजिये कि संस्कृतमें ही सब कथा आप विना पुस्तक देखे, कह सकें। यदि आप बहुतसी कथा विना देखे, कह सकें, तो समझिये कि आपकी प्रगति बहुत हो चुकी है।



## पाठ २७

आगतोऽहं महाभागमृषिं कण्वमुपासितुम् ।
क्व गतो भगवान्भद्रे तन्ममाचक्ष्व शोभने ॥८॥
( म० भारत आदि० ७१ )

पदानि– आगतः । अहं । महाभागं । ऋषिं । कण्वं । उपासितुं । क्व । गतः । भगवान् । भद्रे । तत् । मम । आचक्ष्व । शोभने ।

अन्वयः–महाभागं कण्वं ऋषिं उपासितुं अहं आगतः । हे भद्रे शोभने ! भगवान् क्व गतः ? तत् मम आचक्ष्व ॥

अर्थ– महाभाग्यवान् कण्व ऋषिको (उपासितुं) मिलनेके लिये मैं आगया हूं । हे भद्रे शोभने ! भगवान् कहां गया है ? वह मुझे कहो ।

शकुन्तलोवाच ।

गतः पिता मे भगवान्फलान्याहर्तुमाश्रमात् ।
मुहूर्तं संप्रतीक्षस्व द्रष्टास्येनमुपागतम् ॥ ९ ॥

पदानि– शकुन्तला । उवाच । गतः । पिता । मे । भगवान् । फलानि । आहर्तुं । आश्रमात् । मुहूर्तं । संप्रतीक्षस्व । द्रष्टा । असि । एनं । उपागतम् ॥

अन्वयः–शकुंतला उवाच-मे भगवान् पिता फलानि आहर्तुं आश्रमात् गतः । मुहूर्तं संप्रतीक्षस्व । एनं उपागतं द्रष्टासि ।

अर्थ– मेरे भगवान् पिता फल बटोरनेको आश्रमसे

निकले हैं। आप घडीभर ठहरिये। उनको लौटे हुए देखेंगे।

वैशम्पायन उवाच।

अपश्यमानस्तमृषिं तथा चोक्तस्तया च सः।
तां दृष्ट्वा च वरारोहां श्रीमतीं चारुहासिनीम्॥१०॥

पदानि– अपश्यमानः। तं ऋषिं। तथा। च। उक्तः। तया। च। सः। तां। दृष्ट्वा। च। वरारोहां। श्रीमतीं। चारु-हासिनीम्॥

अन्वयः– तं ऋषिं अपश्यमानः, तया च तथा उक्तः, सः तां वरारोहां श्रीमतीं चारुहासिनीं दृष्ट्वा॥

अर्थ— उस ऋषिको न देखकर, तथा उससे (उक्तः) सुनकर, वह उस (वरारोहां) सुंदर, श्रीमती, सुंदर हंसनेवालीको देखकर [ बोला ]॥

विभ्राजमानां वपुषा तपसा च दमेन च।
रूपयौवनसंपन्नामित्युवाच महीपतिः॥ ११॥

पदानि— विभ्राजमानां। वपुषा। तपसा। च। दमेन। च। रूप-यौवन-संपन्नां। इति। उवाच। महीपतिः।

अन्वयः- वपुषा तपसा दमेन च विभ्राजमानां रूपयौवनसंपन्नां महीपतिः इति उवाच॥

अर्थ- ( वपुषा ) शरीरसे, ( तपसा ) तपसे तथा संयमसे ( वि ) विशेष ( भ्राजमानां ) तेजस्वी और ( रूप ) सुरूपता

तथा (यौवन) तारुण्यसे (संपन्नां) युक्त कुमारिकाको ( महीपतिः ) राजा यह बोला ॥

का त्वं कस्यासि सुश्रोणि किमर्थं चागता वनम्॥
एवं रूपगुणोपेता कुतस्त्वमसि शोभने ॥ १२ ॥

पदानि-का । त्वं । कस्य । असि । सुश्रोणि । किं-अर्थं । च । आगता । वनम् । एवं । रूप-गुण-उपेता । कुतः । त्वं असि । शोभने ॥

अन्वयः-हे सुश्रोणि ! त्वं का ? कस्य असि ? हे शोभने ! एवं रूपगुणोपेता त्वं वनं किमर्थं कुतः आगता असि ?

अर्थ- हे उत्तम श्रोणीवाली ! तू कौन ? किसकी हो ? हे सुंदरी ! इस प्रकार रूप और गुणोंसे युक्त होकर तू वनको किस कारण और कहांसे आ गई है ?

दर्शनादेव हि शुभे त्वया मेऽपहृतं मनः ।
इच्छामि त्वामहं ज्ञातुं तन्ममाचक्ष्व शोभने ॥१३॥

पदानि-दर्शनात् । एव । हि । शुभे । त्वया । मे । अपहृतं । मनः । इच्छामि । त्वां । अहं । ज्ञातुं । तत् । मम । आचक्ष्व । शोभने ॥

अन्वयः--हे शुभे ! दर्शनात् एव हि मे मनः त्वया अपहृतं। हे शोभने ! अहं त्वां ज्ञातुं इच्छामि, तत् मम आचक्ष्व ॥

अर्थ- हे सुंदरी ! दर्शनसे ही मेरा मन तुमने हर लिया है । हे सुंदरी मैं तुझे जानना चाहता हूं, वह मुझे कहो ।

एवमुक्ता तु सा कन्या तेन राज्ञा तमाश्रमे ।
उवाच हसती वाक्यमिदं सुमधुराक्षरम् ॥ १४ ॥

पदानि-एवम् । उक्ता । तु । सा । कन्या । तेन । राज्ञा । तम् । आश्रमे । उवाच । हसती । वाक्यम् । इदम् । सु-मधुर-अक्षरम् ॥

अन्वयः- तेन राज्ञा तु सा कन्या आश्रमे एवं उक्ता, हसती इदं सुमधुराक्षरं वाक्यं उवाच ॥

अर्थ- उस राजाने वह कन्या आश्रममें इस प्रकार कही जानेपर, हंसती हुई यह उत्तम मधुर अक्षरयुक्त वाक्य बोली ॥

इस अंतिम श्लोकके पद दिये नहीं हैं । पाठक अन्वयके अनुसंधानसे पद जाननेका यत्न करें । यह अत्यंत सुगम है।

पाठ समाप्त होते ही पाठक श्लोकोंको वारंवार पढें और केवल श्लोक पढते ही उनका अर्थ ध्यानमें आनेयोग्य अपना अभ्यास बढावें । यदि श्लोक शांतिसे पढें जायेंगे, तो उसी क्षण उनका अर्थ ध्यानमें आ सकता है।

संधि किये हुए वाक्य ।

मे भगवान् पिता कण्वः फलान्याहर्तुमाश्रमाद्गतः । कण्वो मे भगवान्पिता फलान्याहर्तुमाश्रमाद्गतः । आश्रमाद्गतो मे पिता भगवान्कण्वः फलान्याहर्तुम् ।

तं राजानं सुमधुराक्षरमिदं वाक्यमुवाच । सुमधुराक्षरमिदं वाक्यं तं राजानमवाच । उवाच तं राजानमिदं सुमधुराक्षरं वाक्यम् ।

## पाठ २८

पूर्व दो पाठोंमें आये हुए संस्कृत-वाक्योंका संधियुक्त सरल संस्कृत नीचे दिया है। पूर्ववत् इसका भी पाठक अच्छा अभ्यास करें।

संधि किये हुए वाक्य।

अथ राजा दशरथस्तेषां पुत्राणां दारक्रियां चिन्तयामास। तदा तत्र महामुनिर्विश्वामित्रोऽभ्यागच्छत्। हृष्टमना राजा तं मुनिमभिपूजयन्नुवाच। महामुने! त्वयाऽनुगृहीतोऽस्मि। यद्भवतां कार्यमस्ति तदशेषेण करिष्यामि। भवान्हि दैवतं मम।

तदाऽऽनन्दितो विश्वामित्रोऽभ्यभाषत। अहमेकं क्रतुं कर्तुमिच्छामि। तस्य रक्षणार्थं ज्येष्ठं स्वपुत्रं रामं दातुमर्हसि। मम यज्ञस्य विघ्नकर्तारौ मारीचसुबाहू नाम राक्षसौ स्तः। तव पुत्रो हि दिव्येन स्वेन तेजसा राक्षसानां विनाशने समर्थोऽस्ति। यज्ञस्य रक्षणार्थं केवलं दशरात्रमेव कमललोचनं रामं दातुमर्हसि। अहं रामाय च बहुविधं श्रेयो दास्यामि। एतन्मुनेर्वचनं श्रुत्वा राजा निःसंज्ञोऽभवत्।

मे राम ऊनषोडशवर्षो राक्षसानां न योग्यः।

राक्षसाः कूटयुद्धा भवन्ति । अहं तु रामेण वियुक्तो मुहूर्तमपि जीवितुं नोत्सहे। कालोपमौ मारीचसुबाहू । तन्न दास्यामि पुत्रकम् ।

राज्ञ इदं वचनं श्रुत्वा क्रुद्धो विश्वामित्रः प्रत्युवाच। हे राजन्! स्वकीयां प्रतिज्ञां हातुमिच्छसि ? अयुक्त-मेतद्रघुकुलस्य । गच्छाम्यहं विमुखः ।

तदर्षिणा वसिष्ठेनापि मन्त्रितो राजा दशरथो रामं सलक्ष्मणं कौशिकाय विश्वामित्राय ददौ। तदा रामलक्ष्मणौ धनुष्पाणी विश्वामित्रमनुजग्मतुः ॥

पाठक इस पाठको वारंवार पढें और समझनेका यत्न करें। किसी स्थानका संधि समझमें न आया, तो पूर्व पाठके वाक्य देखकर अपनी कठिनता दूर करें। जिनका पूर्वपाठ ठीक हुआ होगा उनके लिये इसमें कोई कठिनता नहीं होगी। अब पूर्व पाठके श्लोकोंका सरल संस्कृत यहां दिया जाता है। इसका भी पूर्ववत् ही अभ्यास पाठक करें।

संस्कृत—वाक्यानि ।

महाभागं कण्वमृषिमुपासितुमहमागतः । हे भद्रे शोभने! भगवान्क्व गतः ? तन्ममाचक्ष्व । शकुन्तलो-वाच–मे भगवान्पिता फलान्याहर्तुमाश्रमान्निर्गतः । मुहूर्तं संप्रतीक्षस्व । एनमुपागतं द्रष्टासि ।

तमृषिमपश्यमानस्तया च तथोक्तः स तां वरारोहां श्रीमतीं चारुहासिनीं दृष्ट्वा वपुषा तपसा दमेन च विभ्राजमानां रूपयौवनसंपन्नां महामतिरित्युवाच ।

हे सुश्रोणि ! का त्वं ? कस्यासि ? हे शोभने ! एवं रूपगुणोपेता त्वं वनं किमर्थं कुत आगतासि ? हे शुभे ! दर्शनादेव हि मे मनः त्वयाऽपहृतम् । हे शोभने ! अहं त्वां ज्ञातुमिच्छामि । तन्ममाचक्ष्व ।

तेन राज्ञा तु सा कन्याऽऽश्रम एवमुक्ता हसतीदं सुमधुराक्षरं वाक्यमुवाच ॥

"पूर्वोक्त श्लोकोंका सरल संस्कृत यह है । यदि पाठकोंका पूर्व पाठ ठीक हुआ है तो यह विना परिश्रम समझमें आजायगा। संधिके कारण यदि किसी स्थानपर कोई कठिनता उत्पन्न हुई, तो वह पूर्व पाठ देखनेसे उसी समय निवृत्त हो सकती है ।

अब कुछ अन्य वाक्य दिये जाते हैं । इनको भी पूर्ववत् ही पढिये ।

१ शिवाय शान्ताय निश्चलाय यशस्विने जगद्बीजाय श्रेष्ठाय तस्मै विश्वात्मने परमेश्वराय नमः ॥

२ सर्वे अपि सुखिनः सन्तु । सर्वे निरामयाः सन्तु । सर्वे भद्राणि पश्यन्तु । न कश्चिद् दुःखं आप्नुयात् ।

३ सर्वदा सत्यं भाषणं एव श्रेयस्करं भवति । सः मनुष्यः सर्वदा सत्यं भाषणं एव वदति ।

४ महामुनिः विश्वामित्रः दशरथं राजानं किं अवदत् ? विश्वामित्रः दशरथं प्रति किमर्थं आगतः ?

५ राज्ञा दशरथेन विश्वामित्रं प्रति किं उक्तम् ? तस्य दशरथस्य भाषणेन विश्वामित्रः संतुष्टः वा न ?

६ कः विश्वामित्रस्य यज्ञस्य विघ्नकर्ता आसीत् ? केन यज्ञस्य रक्षणं कृतम् ?

पाठक इस पाठका अभ्यास करनेके पश्चात् यदि हो सके तो इनके संधि करनेका यत्न करें । यह कोई आवश्यकता नहीं है कि अवश्यही संधि इस समय ठीक होने चाहिये । परंतु पाठक यत्न करके देखें । कोई अशुद्धि भी हुई तो हानि नहीं है ।

संधि किए हुए वाक्य ।

२ सर्वदा सत्यं भाषणमेव श्रेयस्करं भवति । भवति सर्वदा सत्यमेव भाषणं श्रेयस्करम् । श्रेयस्करं भवति सर्वदा सत्यमेव भाषणम् । सत्यमेव भाषणं सर्वदा भवति श्रेयस्करम् ।

२ महामुनिर्विश्वामित्रो दशरथं राजानं किमवदत्? किमवदन्महामुनिर्विश्वामित्रो राजानं दशरथम् ?

इस पाठमें और संधिनियम बताये जाते हैं–

## (१२) द्वादश नियम

क्, च्, ट्, त्, प् के सम्मुख स्वर अथवा मृदु व्यञ्जन आनेसे क्रमशः ग्, ज्, ड्, द्, ब् होवे हैं जैसा–

वाक्+गणः = वाग्गणः ।
अच्+अन्तः = अजन्तः ।
विश्ववाट्+उत्तरः = विश्ववाडुत्तरः ।
तत्+अस्ति = तदस्ति ।
अप्+जम् = अब्जम् ।

## (१३) त्रयोदश नियम

क, च, ट, त, प इन वर्णोंके सम्मुख ङ, ञ, ण, न, म आनेसे पूर्व वर्णोंके भी क्रमशः ङ्, ञ्, ण्, न्, म् ही होवे हैं।

वाक्+मनः = वाङ्मनः ।
वाक्+नमनं = वाङ्नमनं ।
सम्राट्+मुखं = सम्राण्मुखं ।
तत्+नास्ति = तन्नास्ति ।
अप्+मयं = अम्मयं ।

## (१४) चतुर्दश नियम

त्, थ्, द्, ध्, न् के सम्मुख ल आनेसे पूर्व वर्णका भी ल हो जाता है, जैसा–

जगत्+लयः = जगल्लयः ।
अस्मद्+लाभः = अस्मल्लाभः ।
जनान्+लभते = जनाँल्लभते ।

न अनुनासिक होनेसे लकारके पूर्व अनुनासिक हुआ है। नासिकासे उच्चार जिसका होता है, उसको अनुनासिक कहते हैं। ङ, ञ, ण, न, म ये अनुनासिक हैं।

### ( १५ ) पञ्चदश नियम

रेफके सम्मुख रकार आनेसे पूर्व रकारका लोप होता है और उसके पूर्वका स्वर दीर्घ होता है। जैसा—

पुनः+रमते =
पुनर्+रमते = पुना रमते।
हरिः+रथस्य =
हरिर्×रथस्य = हरी रथस्य।

विसर्गका रेफ हुआ, उसका लोप हो गया और पूर्व स्वर दीर्घ हुआ।

### ( १६ ) षोडश नियम

स-कार तथा त-वर्गके सम्मुख श-कार तथा च-वर्ग आनेसे पूर्व वर्णके शकार तथा चवर्ग होते हैं।

चवर्ग—च, छ, ज, झ, ञ।

इसके उदाहरण ये हैं।

हरिः+शेते =

हरिस्+शेते = हरिश्शेते ।

रामः+चलति =

रामस्+चलति = रामश्चलति।

सत्+चित् = सच्चित्।

शार्ङ्गिन्+जय = शार्ङ्गिञ्जय ।

यहां वर्गकी संज्ञा पाठकोंके समझमें आनेके लिये नीचे वर्ग दिये जाते हैं—

क वर्ग--क ख ग घ ङ

च वर्ग-च छ ज झ ञ

ट वर्ग- ट ठ ड ढ ण

त वर्ग-त थ द ध न

प वर्ग-प फ ब भ म

इनमें प्रत्येक वर्गमें अन्तिम वर्ण अनुनासिक है। अनुनासिक = ङ, ञ, ण, न, म ।

( १७ ) सप्तदश नियम

स-कार और त-वर्गके सम्मुख षकार तथा ट-वर्ग आनेसे पूर्व वर्णके ष-कार और ट-वर्ग होते हैं।

रामः+षष्ठः = रामस्+षष्ठः = रामष्षष्ठः ।

रामः+टीकते = रामस्+टीकते+रामष्टीकते ।

तत्+टीका = तट्टीका ।

पाठक इतने नियम ध्यानमें धरेंगे तो आवश्यक संधि-विषयका ज्ञान उनको हो सकता है।

इस समय यह कोई आवश्यक नहीं है कि सब संधि ठीकही आजायँ। जैसी जैसी भाषामें उनकी प्रगति होती जायगी, वैसा संधियोंका ज्ञान स्वयं होता जायगा।

यद्यपि यह प्रारंभमें कठिनसा प्रतीत होता है, तथापि अभ्याससे यह अत्यंत सुगम प्रतीत होगा। इसलिये पाठक प्रतिदिन थोडा थोडा अभ्यास करते जायँ, शेष बात स्वयं बनती जायगी।

संधि किये हुए वाक्य।

१ सर्वे जना निरामयाः सन्तु। सन्तु सर्वे जना निरामयाः। निरामयाः सन्तु सर्वे जनाः।

२ सर्वे मानवाः सुखिनः सन्तु। सन्तु सर्वे मानवाः सुखिनः। सर्वे सुखिनो मानवाः सन्तु।

३ सर्वे भद्राणि पश्यन्तु न कश्चिद् दुःखमाप्नुयात्। दुःखं कश्चिन्नाप्नुयात्सर्वे भद्राणि पश्यन्तु।

४ दर्शनादेव हि मे मनस्त्वयाऽपहृतम्। त्वयाऽपहृतं मे मनो दर्शनादेव। मे मनस्त्वयाऽपहृतं दर्शनादेव।

५ अहं त्वां ज्ञातुमिच्छामि। ज्ञातुमिच्छाम्यहं त्वाम्। त्वामहमिच्छामि ज्ञातुम्। इच्छाम्यहं त्वां ज्ञातुम्।

## पाठ १०

### संस्कृत-वाक्यानि ।

१ अध्यर्धयोजनं गत्वा सरय्वाः तीरे विश्वामित्रः रामं अब्रवीत् । २ गृहाण सलिलम् । ददामि त्वां मन्त्रं विद्ये च बलां अतिबलां च । ३ रामः अपि जलं स्पृष्ट्वा प्रहृष्टवदनः तत् सर्वं प्रतिजग्राह । ४ विद्यायुक्तः रामः शरदि दिवाकरः इव शुशुभे । ५ विश्वामित्रेण सह रामलक्ष्मणौ गंगासरय्वोः शुभे संगमे ऋषीणां पुण्यं आश्रमस्थानं ददृशाते । ६ मुनयः च शुभां नावं उपस्थाप्य विश्वामित्रं अब्रुवन् । ७ आरोहतु भवान् नावं राजकुमारपुरस्कृतः ।

### भाषा-वाक्य ।

१ आधा योजन जाकर सरयू नदीके तटपर विश्वामित्र रामसे बोला । २ 'लो जल । देता हूं तुमको मन्त्र और बला तथा अतिबला नामक दो विद्या' । ३ रामने भी जलको स्पर्श करके आनन्दित वदनसे उस सबको लिया । ४ विद्यायुक्त राम शरदृतुमें सूर्यके समान शोभने लगा । ५ विश्वामित्रके साथ राम और लक्ष्मण गंगा और सरयूके शुभ संगमपर ऋषियोंका पुण्य आश्रमस्थान देखते रहे । ६ मुनि भी शुभ नौकाको लाकर विश्वामित्रसे बोले । ७ 'चढें आप नौकापर राजकुमारोंको आगे करके ।'

संस्कृत- वाक्यानि ।

८ मा अभूत् कालस्य विपर्ययः । ९ विश्वामित्रः रामलक्ष्मणाभ्यां सहितः नदीं ततार । १० रामः घोरं वनं दृष्ट्वा विश्वामित्रं पप्रच्छ । ११ अहो ! शोभनं वनं पर किं दारुणम् ? १२ विश्वामित्रः उवाच–हे क्षत्रियकुमार ! अस्मिन् घोरे वने ताटिका नाम्नी राक्षसी वसति । १३ सा सुंदस्य राक्षसस्य भार्या । १४ अतिपराक्रमः मारीचः राक्षसः अस्याः पुत्रः । १५ सा इयं ताटिका अस्मिन् वने अस्ति । १६ इदानीं अस्याः वन एव अस्माभिः गन्तव्यम् । १७ अतः मम आदेशात् बाहुबलं आश्रित्य इमां जहि ।

भाषा वाक्य ।

८ मत होवे समयका अतिक्रमण । ९ विश्वामित्र रामलक्ष्मणोंके साथ नदीके पार हुआ । १० रामने घोर वन देखकर विश्वामित्रसे पूछा । ११ 'अजी ! सुंदर वन है, परंतु क्यों भयानक है ?' १२ विश्वामित्र बोला-'हे क्षत्रियके पुत्र ! इस वनमें भयङ्कर ताटिका नामक राक्षसी रहती है। १३ वह सुन्द राक्षसकी पत्नी है। १४ अतिपराक्रमी मारीच राक्षस इसका पुत्र है। १५ वह यह राक्षसी इस वनमें है। १६ अब इसके वनमेंही हमें जाना है। १७ इसलिये मेरे आदेशसे बाहुबलका आश्रय कर और इसे मार ।'

संस्कृत-वाक्यानि ।

१८ 'कुरु इमं देशं निष्कण्टकम् । १९ नहि कः अपि इमं देशं साम्प्रतं आगन्तुं शक्तः । २० स्त्रीवधे त्वया घृणा न कार्या । २१ चातुर्वर्ण्यहितार्थाय देशस्य हिताय प्रजासंरक्षणाय च राजसूनुना एतत् कर्तव्यं एव ।' २२ एतत् विश्वामित्रवचनं श्रुत्वा, रामः धनुर्मध्ये मुष्टिं बध्वा शब्देन दिशः नादयन, तीव्रं ज्याघोषं अकरोत् । २३ तत् शब्दं श्रुत्वा राक्षसी क्रोधेन मूर्च्छिता अभवत् । २४ यत्र ज्याघोषः जातः तत्र अभ्यद्रवत् च ।

भाषा-वाक्य

१८ 'कर इस देशको (निष्कण्टकं) शत्रुरहित । १९ नहीं कोई भी इस देशको इस समय आनेमें समर्थ है । २० स्त्रीका वध करनेमें तूने घृणा नहीं करनी । २१ चातुर्वर्ण्यके हितके लिये, देशके हितके लिये तथा प्रजाकी रक्षाके लिये राजपुत्रको यह करनाही चाहिये ।' २२ यह विश्वामित्रका भाषण सुनकर, रामने धनुष्यके मध्यमें मुट्ठी बांधकर, शब्दसे दिशाओंको नादित करके डोरीका बडा आवाज किया । २३ वह शब्द सुनके राक्षसी क्रोधसे मूर्च्छित् हो गई । २४ जहां (ज्या) धनुष्यकी डोरीका (घोषः) शब्द हुआ वहां दौडकर आगई ।

पाठक इस पाठको वारंवार पढें और इसमें आये संस्कृत वाक्य पुनः पुनः पढकर अच्छी प्रकार तैयार करें ।

---

## पाठ ११

शकुन्तलोवाच ।

कण्वस्याहं भगवतो दुष्यन्त दुहिता मता ।
तपस्विनो धृतिमतो धर्मज्ञस्य महात्मनः ॥ १५ ॥

अन्वयः—हे दुष्यन्त ! महात्मनः धर्मज्ञस्य धृतिमतः तपस्विनः भगवतः कण्वस्य अहं दुहिता मता ॥

अर्थः—हे दुष्यन्त ! महात्मा, धर्मके जानकार, धैर्यवान् तपस्वी भगवान् कण्वकी मैं (दुहिता) पुत्री ( मता ) मानी हुई हू ॥

दुष्यन्त उवाच ।

ऊर्ध्वरेता महाभागे भगवाँल्लोकपूजितः ।
चलेद्धि वृत्ताद्धर्मोऽपि न चलेत्संशितव्रतः ॥ १६ ॥

अन्वयः—हे महाभागे ! लोकपूजितः भगवान् ऊर्ध्वरेताः । धर्मः अपि वृत्तात् चलेत् हि संशितव्रतः न चलेत् ॥

अर्थ—हे महाभाग्यवती ! लोगोंमें सन्मान्य भगवान् ऊर्ध्वरेता है । धर्म भी ( वृत्तात् ) चरित्रसे चलित होगा [ परंतु ] ( संशितव्रतः ) व्रत पालन करनेवाला ( कण्व ) नहीं चलित होगा ।

कथं त्वं तस्य दुहिता संभूता वरवर्णिनी ।
संशयो मे महानत्र तन्मे छेत्तुमिहार्हसि ॥१७॥

अन्वयः—त्वं वरवर्णिनी तस्य दुहिता कथं संभूता ?

मे अत्र महान् संशयः । इह मे तत् छेत्तुं अर्हसि ।

अर्थ-तूं सुंदर रूपवाली उसकी पुत्री कैसी बनी? मुझे यहां बडा संशय है। यहां मेरा वह ( संशय ) छेदन करनेके लिये तू योग्य हो।

शकुन्तलोवाच।

ऋषिः कश्चिदिहागम्य मम जन्माभ्यचोदयत्।
तस्मै प्रोवाच भगवान्यथा तच्छृणु पार्थिव ॥१८॥

पदानि-ऋषिः। कः। चित्। इह। आगम्य। मम। जन्म। अभ्यचोदयत्। तस्मै। प्र। उवाच। भगवान्। यथा। तत्। शृणु। पार्थिव ॥

अन्वयः-कश्चित् ऋषिः इह आगम्य मम जन्म अभ्यचोदयत्। हे पार्थिव! तस्मै भगवान् यथा प्रोवाच तत् शृणु ॥

अर्थ-कोई एक ऋषि यहां आकर मेरे जन्मके विषयमें पूछने लगा। हे राजा! उसके लिये भगवान् [ ऋषि ] ने जैसा कहा, वह सुनो।

तप्यमानः किल पुरा विश्वामित्रो महत्तपः।
सुभृशं तापयामास शक्रं सुरगणेश्वरम् ॥२०॥

अन्वयः—पुरा किल विश्वामित्रः तपः तप्यमानः सुरगणेश्वरं शक्रं सुभृशं तापयामास ॥

अर्थ-पूर्व समयमें निश्चयसे विश्वामित्र बडा तप तपता

हुआ ( सुर-गण-ईश्वरं ) देवोंके गणोंके ईश ( शक्रं ) इन्द्रको विशेष ताप देने लगा।

अथापश्यद्वरारोहा तपसा दग्धकिल्बिषम्।
विश्वामित्रं तप्यमानं मेनका भीरुराश्रमे ॥ ९ ॥
( म० भा० आदि० ७२ )

पदानि—अथ। अपश्यत्। वरारोहा। तपसा। दग्ध-किल्बिषं। विश्वामित्रं। तप्यमानं। मेनका। भीरुः। आश्रमे॥

अन्वयः— अथ वरारोहा भीरुः मेनका आश्रमे तपसा दग्धकिल्बिषं तप्यमानं विश्वामित्रं अपश्यत्।

अर्थ— अनंतर सुंदरी ( भीरुः ) लज्जासे डरनेवाली मेनकाने आश्रममें तपसे जिसके पाप जले हैं ऐसे तपनेवाले विश्वामित्रको देखा।

रममाणौ यथाकामं यथैकदिवसं तथा।
जनयामास स मुनिर्मेनकायां शकुन्तलाम्॥ ९ ॥

पदानि—रममाणौ। यथाकामं। यथा। एकदिवसं। तथा। जनयामास। सः। मुनिः। मेनकायां। शकुन्तलाम्॥

अन्वयः—यथा एकदिवसं तथा यथाकामं रममाणौ। सः मुनिः मेनकायां शकुन्तलां जनयामास॥

अर्थ-जैसा एक दिन होता है वैसाही यथेच्छ [ दोनों ] रम-माण हुए और उस मुनिने मेनकामें शकुन्तलाको जन्म दिया।

भावार्थ—मेनका और विश्वामित्र बहुत काल ऐसे रम-माण हुए और उनका समय ऐसा शीघ्र व्यतीत हुआ जैसा कि एक दिन व्यतीत होता है। ( यह आशय श्लोकके प्रथम अर्धका है )।

निर्जने तु वने यस्माच्छकुन्तैः परिपालिता।
शकुन्तलेति नामास्याः कृतं चापि ततो मया ॥१६॥

अन्वयः—यस्मात् निर्जने वने शकुन्तैः परिपालिता। ततः अस्याः नाम शकुन्तला इति च आपि मया कृतम् ॥

अर्थ—जिस कारण निर्जन वनमें शकुन्त पक्षियोंद्वारा इसका पालन हुआ ( ततः ) उस कारण इसका नाम शकुन्तला ऐसा मैंने किया।

पाठ समाप्त करनेके पश्चात् पाठक केवल संस्कृत श्लोकही कई वार पढें और उनका आशय समझनेका यत्न करें।

संधि किये हुए वाक्य।

शकुन्तलोवाच।

हे दुष्यन्त! महात्मनो धर्मज्ञस्य धृतिमतस्तपस्विनो भगवतः कण्वस्याहं दुहिता मता।

दुष्यन्त उवाच- हे महाभागे! लोकपूजितो भगवानूर्ध्वरेताः। धर्मोऽपि वृत्ताच्चलेद्धि संशितव्रतो न चलेत्। त्वं वरवर्णिनी तस्य दुहिता कथं संभूता? मेऽत्र महान् संशयः, इह मे तच्छेत्तुमर्हसि।

## पाठ १२

पूर्व दोनों पाठोंमें जो वाक्य दिये हैं, उनका संधि बनाकर सरल संस्कृत इस पाठमें दिया जाता है। पाठक इसका ठीक अभ्यास करें।

संधि किये हुये वाक्य।

अध्यर्धयोजनं गत्वा सरय्वास्तीरे विश्वामित्रो राममब्रवीत्। गृहाण सलिलम्। ददामि त्वां मन्त्रं विद्ये च बलामतिबलां च।

रामोऽपि जलं स्पृष्ट्वा प्रहृष्टवदनस्तत्सर्वं प्रतिजग्राह। विद्यायुक्तो रामः शरदि दिवाकर इव शुशुभे।

विश्वामित्रेण सह रामलक्ष्मणौ गंगासरय्वोः शुभे संगमे ऋषीणां पुण्यमाश्रमस्थानं ददृशाते।

मुनयश्च शुभां नावमुपस्थाप्य विश्वामित्रमब्रुवन्। आरोहतु भवान्नावं राजकुमारपुरस्कृतः। माऽभूत्कालस्य विपर्ययः। विश्वामित्रो रामलक्ष्मणाभ्यां सहितो नदीं ततार।

रामो घोरं वनं दृष्ट्वा विश्वामित्रं पप्रच्छ, अहो! शोभनं वनं परं किं दारुणम्?

विश्वामित्र उवाच—हे क्षत्रियकुमार! अस्मिन्वने घोरा ताटिका नाम्नी राक्षसी वसति।

सा सुंदस्य राक्षसस्य भार्या। अतिपराक्रमो मारीचो राक्षसः अस्याः पुत्रः। सेयं ताटिकाऽस्मिन्वनेऽस्ति। इदानीमस्या वनमेवास्माभिर्गन्तव्यम्। अतो ममोपदेशाद्बाहुबलमाश्रित्येमां जहि। कुर्विमं देशं निष्कंटकम्। न हि कोऽपीमं देशं साम्प्रतमागन्तुं शक्तः।

स्त्रीवधे त्वया घृणा न कार्या। चातुर्वर्ण्यहितार्थाय देशस्य हिताय प्रजासंरक्षणाय च राजसूनुनैतत्कर्तव्यमेव।

एतद्विश्वामित्रवचनं श्रुत्वा रामो धनुर्मध्ये मुष्टिं बध्वा शब्देन दिशो नादयन्, तीव्रं ज्याघोषमकरोत्। तच्छब्दं श्रुत्वा राक्षसी क्रोधेन मूर्च्छिताऽभवत्

इसमें जो संधि सुगमतासे पाठकोंको नहीं खुलेंगे, उनको पूर्व पाठमें देखकर समझनेका यत्न पाठक करें। इस प्रकार अभ्यास करनेसे पाठकोंको संधि बनाना तथा संधि खोलना सुगमताके साथ आ जायगा।

अब पूर्व पाठके श्लोकोंका सरल संस्कृत दिया जाता है। उसका भी पाठक पूर्ववत् अभ्यास करें--

संस्कृत—वाक्यानि

हे दुष्यन्त! महात्मनो धर्मज्ञस्य धृतिमतस्तपस्विनो भगवतः कण्वस्याहं दुहिता मता।

दुष्यन्त उवाच- हे महाभागे ! लोकपूजितो भगवानूर्ध्वरेताः कण्वः । धर्मोऽपि वृत्ताच्चलेद्धि, संशितव्रतः कण्वो न चलेत् ।

त्वं वरवर्णिनी तस्य दुहिता कथं संभूता ? मेऽत्र महान्संशयः । इह मे तच्छेत्तुमर्हसि ।

शकुन्तलोवाच - कश्चिदृषिरिहागम्य मम जन्माभ्यचोदयत् । हे पार्थिव दुष्यन्त ! तस्मै भगवान्यथा प्रोवाच तच्छृणु ।

पुरा किल विश्वामित्रो महत्तपस्तप्यमानः सुरगणेश्वरं शक्रं सुभृशं तापयामास ।

अथ वरारोहा भीरुर्मेनकाऽऽश्रमे तपसा दग्धकिल्बिषं तप्यमानं विश्वामित्रमपश्यत् ।

यथैकदिवसं तथा यथाकामं रममाणौ । स मुनिर्मेनकायां शकुन्तलां जनयामास ।

यस्मान्निर्जने वने शाकुन्तैः परिपालिता ततः अस्या नाम शकुन्तलेति चापि मया कृतम् ।

इसमें यदि संधि खोलनेमें कुछ कठिनता पाठकोंको हुई तो पूर्व पाठके श्लोक देखकर उस कठिनताकी निवृत्ति कर सकते हैं ।

## प्रश्नाः ।

१ सरय्वाः तीरे विश्वामित्रः रामं किं अब्रवीत् ?
२ ततः रामेण किं कृतम् ? रामेण का विद्या प्राप्ता ?
३ केन सा विद्या रामाय दत्ता ?
४ नदीतीरे कस्य आश्रम आसीत् ?
५ विश्वामित्रः कथं नदीं ततार ?
६ नदीपारं गत्वा रामेण किं दृष्टम् ?
  तत् वनं कथं आसीत् ?
७ विश्वामित्रेण किं कथितम् ?
८ तस्मिन् वने का राक्षसी आसीत् ?
  तस्याः नाम किम् ?
९ सा कस्य भार्या ? तस्याः कः पुत्रः ?
१० राजपुत्रेण देशस्य हिताय किं कर्तव्यम् ?
११ रामेण किं कृतम् ?

पाठक इन प्रश्नोंका उत्तर संस्कृतमेंही देनेका यत्न करें पूर्व पाठके तथा इस पाठके संस्कृत वाक्योंमें इनके उत्तर हैं। यदि आपने यह पाठ ठीक बना दिया है, तो आप उचित उत्तर दे सकेंगे।



## पाठ १३

इस पाठमें कुछ संधिके वाक्य खोलकर बताये जाते हैं। इनको देखकर संधि खोलनेका ज्ञान होगा। इसलिये इस दृष्टिसे इसका अभ्यास पाठक करें।

ततोऽगच्छन्महाबाहुः =
ततः। अगच्छत्। महाबाहुः।

एकोऽमात्यान्विसृज्यतान् =
एकः। अमात्यान्। विसृज्य। तान्।

नापश्यच्चाश्रमे तस्मिन् =
न। अपश्यत्। च। आश्रमे। तस्मिन्।

तमृषिं संशितव्रतम् =
तं। ऋषिं। संशितव्रतम्।

सोऽपश्यमानस्तमृषिम्।
सः। अपश्यमानः। तं। ऋषिम्।

क इहेत्युच्चैर्वनं सन्नादयन्निव =
कः। इह। इति। उच्चैः। वन। सन्नादयन्। इव।

ततः अगच्छत् = ततोऽगच्छत्।
अगच्छत् महाबाहुः = अगच्छन्महाबाहुः।
महाबाहुः एकः = महाबाहुरेकः।
एकः अमात्यान् = एकोऽमात्यान्।

न अपश्यत् = नापश्यत् ।
अपश्यत् च = अपश्यच्च ।
च आश्रमे = चाश्रमे ।
सः अपश्यमानः = सोऽपश्यमानः ।
पश्यमानः त्वं = पश्यमानस्त्वं ।
कः इह = क इह ।
इह इति = इहेति ।
इति उच्चैः = इत्युच्चैः ।
उच्चैः वनं = उच्चैर्वनं ।
सन्नादयन् इव = सन्नादयन्निव ।

इस प्रकार पाठक संधियोंको खोलनेका यत्न करें। इस पुस्तकमें कई पाठोंमें संधि बनाकर संस्कृत वाक्य दिये हैं। उनको खोलनेका यत्न करनेसे पूर्वोक्त नियमोंका अनुभव हो सकता है। एक समय ये नियम ठीक प्रकार समझमें आ जायेंगे, तो फिर भूलतेही नहीं। अब और देखिये—

प्रभावशालिनः महात्मनः-प्रभावशालिनो महात्मनः।
महात्मनः राज्ञः- महात्मनो राज्ञः।
राज्ञः धर्मज्ञस्य-राज्ञो धर्मज्ञस्य।

सुतः न—सुतो न ।
न आसीत्—नासीत् ।
यजामि इति—यजामीति ।
गुरून् शीघ्रं—गुरूञ्छीघ्रम् ।
अत्र आनय—अत्रानय ।
आनीतान् तान्—आनीताँस्तान् ।
तत् अर्थं—तदर्थम् ।
नामकः यज्ञः—नामको यज्ञः ।
तत् वचनं—तद्वचनम् ।
सर्वे अपि—सर्वेऽपि ।
यज्ञस्य अन्ते—यज्ञस्यान्ते ।
तथा इति—तथेति ।
इति उक्त्वा—इत्युक्त्वा ।
पायसः राज्ञा—पायसो राज्ञा ।
प्रीतः राजा—प्रीतो राजा ।
तस्मात् यज्ञात्—तस्माद्यज्ञात् ।
गृहीत्वा अन्तः पुरं—गृहीत्वाऽन्तःपुरम् ।
गृह्णीष्व इति—गृह्णीष्वेति
पायसस्य अर्धं—पायसस्यार्धम् ।
सुमित्रायै अवशिष्टं—सुमित्राया अवशिष्टम् ।

ततः ताः = ततस्ताः ।
उत्सवः आसीत् = उत्सव आसीत् ·
लक्ष्मणः रामस्य = लक्ष्मणो रामस्य ।
भरतस्य अनुगामी = भरतस्यानुगामी ।
प्रियकरः तथा = प्रियकरस्तथा ।
अभवन् तदा = अभवँस्तदा ।

इसमें शब्दोंके संधि किस प्रकार बनते हैं यह बताया है । इनके संधि किन नियमोंके अनुसार बने हैं, यह भी पाठक देखें और विचार करें । ऐसा करनेसे संधिविषय पाठकोंको ठीक ठीक ज्ञात हो सकता है ।

जो जो श्लोक दिये हैं, इनके अंदर संधि अवश्य देखा करें और खोलना और बनाना भी समझ लें । थोडासा प्रयत्न करनेसे इस विषयमें पाठकोंकी प्रगति हो सकती है ।

संधि किये हुए वाक्य

१ तत्र तमृषिमपश्यमानस्तां शकुन्तलां स राजोवाच । स राजा तां शकुन्तलामुवाच तमृषिं तत्रापश्यमानः । ऋषिं तमपश्यमानस्तत्र तां शकुन्तलामुवाच स राजा ।

२ तस्य यज्ञस्यान्ते राजा दशरथ ऋष्यशृङ्गमब्रवीत् । यज्ञस्य तस्यान्ते दशरथो राजाऽब्रवीदृष्यशृङ्गम् ।

# पाठ १४

संस्कृत-वाक्यानि ।

१ रामं रजोमेघेन सा ताटिका राक्षसी मुहूर्तं व्यामोहयत्। २ परन्तु पश्चात् तां ताटिकां रामः शरेण उरसि विव्याध। ३ तेन सा पपात ममार च। ४ ततः ताटिकावधेन तुष्टः मुनिवरः विश्वामित्रः रामं उवाच। ५ 'हे राजपुत्र ! सर्वथा परितुष्टः अस्मि ते अनेन शौर्येण। ६ अतः ते सर्वाणि अपि अस्त्राणि प्रीत्या प्रयच्छामि। ७ तैः अस्त्रैः समन्वितः युद्धे शत्रून् जेष्यसि।

भाषा—वाक्य

१ रामको ( रजः-मेघेन ) धूलिके बादलसे उस ताटिका राक्षसीने (मुहूर्तं) थोडी देर ( व्यमोहयत् ) मोहित किया। २ परंतु पश्चात् उस ताटिकाको रामने बाणसे ( उरसि ) छातीमें ( विव्याध ) वेध किया। ३ उससे वह गिरी और मर गई। ४ पश्चात् ताटिकाके वधसे संतुष्ट बना हुआ मुनिश्रेष्ठ विश्वामित्र रामसे बोला। ५ 'हे राजपुत्र ! सर्वथा संतुष्ट हुआ हूं तेरे इस शौर्यसे। ६ इसलिये तुझे सभी अस्त्र प्रेमसे देता हूं। ७ उन अस्त्रोंसे युक्त होकर युद्धमें शत्रुओंको तू जीतेगा।

संस्कृत-वाक्यानि ।

८ इति उक्त्वा स विप्रः रामाय तानि सर्वाणि एव अस्त्राणि न्यवेदयत् । ९ ततः स विश्वामित्रः रामं लक्ष्मणं च प्रगृह्य स्वकीयं सिद्धाश्रमं प्राविशत् । १० तत्र मुहूर्तं विश्रान्तौ रामलक्ष्मणौ ' मुनिश्रेष्ठः यज्ञ-दीक्षां प्रविशतु ' इति तं अनुबबन्धतुः । ११ तत् श्रुत्वा सर्वे अपि मुनयः रामलक्ष्मणौ प्रशशंसुः । १२ अद्य प्रभृति षड् रात्रं रक्षतां युवां इति च ऊचुः । १३ तौ अपि यत्तौ षड् अहोरात्रं तपोवनं अरक्षताम् ।

भाषा-वाक्य

८ ऐसा कहकर उस ब्राह्मणने रामको वे सब अस्त्र निवेदन किये । ९ पश्चात् वह विश्वामित्र राम और लक्ष्मण को लेकर अपने सिद्धाश्रममें प्रविष्ट हुआ । १० वहां दो घडी विश्राम लेते हुए रामलक्ष्मण 'मुनिश्रेष्ठ यज्ञकी दीक्षामें प्रविष्ट होवे ' ऐसा उसे कहने लगे । ११ वह सुनके सभी मुनि रामलक्ष्मणोंकी प्रशंसा करने लगे । १२ ' आजसे आगे छः रात्री रक्षण कीजिये आप दोनों,' ऐसा भी कहा गया । १३ ( तौ ) वे दोनों भी (यत्तौ) सिद्ध होकर छः अहोरात्र तपोवनकी रक्षा करते रहे ।

संस्कृत वाक्यानि ।

१४ षष्ठ्यां रात्रौ मायां कुर्वाणौ अभ्यधावताम् । १५ परमक्रुद्धः रामः मारीचस्य राक्षसस्य उरसि मानवं अस्त्रं चिक्षेप । १६ तेन अस्त्रेण मारीचः सागरे क्षिप्तः । १७ मारीचं सागरे क्षिप्तं दृष्ट्वा सुबाहोः उरसि आग्नेयं अस्त्रं चिक्षेप । १८ सः अपि सुबाहुः अस्त्रेण विद्धः भुवि प्रापतत् । १९ रामः अपि वायव्यास्त्रेण शेषान् राक्षसान् जघान । २० एवं निर्विघ्नतया समाप्ते यज्ञे विश्वामित्रः दिशः राक्षसहीनाः दृष्ट्वा रामं अब्रवीत् । २१ ' कृतार्थः अस्मि महाबाहो ! '।

भाषा- वाक्य ।

१४ छठी रात्रीमें (मायां) कपट करनेवाले दो राक्षसोंने धावा किया । १५ बडे क्रुद्ध रामने मारीच राक्षसकी छातीपर मानव अस्त्र (चिक्षेप) फेंका । १६ उस अस्त्रसे मारीच समुद्रमें फेंका गया । १७ मारीच समुद्रमें फेंका गया देखकर सुबाहुकी छातीमें आग्नेय अस्त्र फेंक दिया । १८ वह भी सुबाहु अस्त्रसे विद्ध होकर भूमिपर गिर गया । १९ रामने भी वायव्यास्त्रसे अवशिष्ट राक्षसोंको मारा । २० इस प्रकार निर्विघ्नतासे यज्ञ समाप्त होकर दिशाओंको राक्षसहीन देखकर विश्वामित्र रामसे बोला । २१ ' हे महाभुज राम ! मैं कृतार्थ हुआ हूं । '

संस्कृत-वाक्यानि ।

२२ मिथिलोपवने तु तत्र निर्जनं आश्रमपदं दृष्ट्वा राघवः पप्रच्छ ' कस्य अयं आश्रमः ? ' २३ विश्वामित्रः उवाच । २४ 'अत्र पुरा अहल्यासहितः गौतमः तपः आतिष्ठत् । २५ एष गौतमस्य महतः रम्यः आश्रमः । '

भाषा-वाक्य

२२ मिथिला नगरीके पासके उपवनमें (निर्जनं) जनहीन आश्रमस्थान देखकर रामने पूछा कि ' किसका यह आश्रम है ?' २३ विश्वामित्रने उत्तर दिया । २४ ' यहां पूर्वकालमें अहल्याके सहित गौतममुनि तप करते रहे । २५ यह गौतम ऋषिका रम्य आश्रम है ।

पाठक इस पाठको बडे ध्यानसे पढें । प्रायः पढतेही यह पाठ समझमें आ जायगा । यदि पढतेही समझमें नहीं आया तो थोडी वार अधिक पढिये । अधिक वार पढनेसे ही सब कठिनाइयाँ स्वयं दूर हो जाती हैं ।

इस पाठके साथ पूर्व स्थलमें आये हुए रामायणके पाठ भी पाठक पढें, तो संस्कृतभाषामें सुगमतासे प्रवेश हो सकता है ।

## पाठ १५

इस पाठमें महाभारतके कुछ श्लोक देते हैं और अन्वयके साथ अर्थ देते हैं । पाठक इनका अच्छी प्रकार अभ्यास करें-

दुर्योधन उवाच ।

आचार्यः पाण्डुपुत्रान्वै पुत्रवत्परिरक्षति ।
त्वमप्युपेक्षां कुरुषे तेषु नित्यं द्विजोत्तम ॥ ८६ ॥
( म० भा० द्रोण अ० १५९ )

पदानि-आचार्यः। पाण्डु-पुत्रान् । वै । पुत्रवत् । परिरक्षति। त्वम् । अपि । उपेक्षाम् । कुरुषे । तेषु । नित्यम् । द्विजोत्तम ।

अन्वयः-हे द्विजोत्तम ! आचार्यः पाण्डुपुत्रान् वै पुत्रवत् परिरक्षति । त्वं अपि तेषु नित्यं उपेक्षां कुरुषे ।

अर्थ—हे ब्राह्मणश्रेष्ठ ! आचार्य पाण्डुके पुत्रोंका पुत्रवत् रक्षण करता है । और तूभी उनकी नित्य उपेक्षा करता है ॥

मम वा मन्दभाग्यत्वान्मन्दस्ते विक्रमो युधि ।
धर्मराजप्रियार्थं वा द्रौपद्या वा न विद्म तत् ॥८७॥

पदानि-मम। वा । मन्दभाग्यत्वात् । मन्दः । ते । विक्रमः । युधि । धर्मराजप्रियार्थं । वा । द्रौपद्याः । वा । न । विद्म । तत् ॥

अन्वयः-मम वा मन्दभाग्यत्वात् युधि ते विक्रमः मन्दः । धर्मराजप्रियार्थं वा द्रौपद्याः वा प्रियार्थं, न तत् विद्म ॥

अर्थः-मेरे मन्दभाग्यके कारण युद्धमें तेरा पराक्रम कम दीखता है, अथवा धर्मराजके हितके लिये, अथवा द्रौपदीके हितके लिये, यह हम नहीं जानते ॥

धिगस्तु मम लुब्धस्य यत्कृते सर्वबान्धवाः ।
सुखार्हाः परमं दुःखं प्राप्नुवन्त्यपराजिताः ॥८८॥

पदानि-धिक् । अस्तु । मम । लुब्धस्य । यत्कृते । सर्वबान्धवाः । सुखार्हाः । परमम् । दुःखम् । प्राप्नुवन्ति । अ--पराजिताः ॥

अन्वयः-- मम लुब्धस्य धिक् अस्तु । यत्कृते सुखार्हाः अपराजिताः सर्वबान्धवाः परमं दुःखं प्राप्नुवन्ति ॥

अर्थ--मुझ लोभीके लिये धिक्कार है । जिसके लिये सुख भोगनेके योग्य और कभी पराजित न हुए सब बंधुबान्धव परम दुःखको पा रहे हैं ।

को हि शस्त्रविदां मुख्यो महेश्वरसमो युधि ।
शत्रुं न क्षपयेच्छक्तो यो न स्याद्गौतमीसुतः॥८९॥

पदानि-कः । हि । शस्त्रविदाम् । मुख्यः । महेश्वरसमः । युधि । शत्रुम् । न । क्षपयेत् । शक्तः । यः । न । स्यात् । गौतमीसुतः ॥

अन्वयः—कः हि शस्त्रविदां मुख्यः युधि महेश्वरसमः शक्तः शत्रुं न क्षपयेत् । यः गौतमीसुतः न स्यात् ॥

अर्थ—कौन भला शस्त्रधारियोंमें मुख्य, युद्धमें महादेवके समान समर्थ, शत्रुका नाश न करेगा, जो गौतमी पुत्र न होगा ॥

अश्वत्थामन्प्रसीदस्व नाशयैतान्ममाहितान् ।
तवास्त्रगोचरे शक्ताः स्थातुं देवा न दानवाः ॥९०॥

पदानि–अश्वत्थामन् । प्रसीदस्व । नाशय । एतान् । मम । अहितान् । तव । अस्त्र-गोचरे । शक्ताः । स्थातुम् । देवाः । न । दानवाः ॥

अन्वयः–हे अश्वत्थामन् ! प्रसीदस्व । एतान् मम अहितान् नाशय । देवाः दानवाः तव शस्त्रगोचरे स्थातुं न शक्ताः ॥

अर्थ—हे अश्वत्थामा ! प्रसन्न हो । इन मेरे शत्रुओंका नाश कर । देव अथवा दानव तेरे बाणोंके सम्मुख ठहर नहीं सकते ॥

पञ्चालान्सोमकाँश्चैव जहि द्रौणे सहानुगान् ।
वयं शेषान्हनिष्यामस्त्वयैव परिरक्षिताः ॥ ९१ ॥

पदानि–पञ्चालान् । सोमकान् । च । एव । जहि । द्रौणे । सहानुगान् । वयम् । शेषान् । हनिष्यामः । त्वया । एव । परिरक्षिताः ॥

अन्वयः-हे द्रौणे ! सहानुगान् पञ्चालान् सोमकान् एव च जहि । त्वया परिरक्षिताः वयं शेषान् हनिष्यामः ॥

अर्थ–हे द्रोणपुत्र ! अनुयायियोंके समेत पञ्चाल और सोमकोंका नाश कर । तेरेद्वारा रक्षित होकर हम अन्योंका वध करेंगे ॥

एते हि सोमका विप्र पञ्चालाश्च यशस्विनः ।
मम सैन्येषु संक्रुद्धा विचरन्ति दवाग्निवत् ॥९२॥

पदानि-एते । हि । सोमकाः । विप्र । पञ्चालाः । च । यशस्विनः । मम । सैन्येषु । संक्रुद्धाः । विचरन्ति । दवाग्निवत् ॥

अन्वयः–हे विप्र ! हि एते सोमकाः यशस्विनः पञ्चालाः च संक्रुद्धाः मम सैन्येषु दवाग्निवत् विचरन्ति ॥

अर्थ–हे ब्राह्मण ! क्योंकि ये सोमक और यशस्वी पञ्चाल क्रोधित होकर मेरे सैन्योंमें दावाग्निके समान भ्रमण करते हैं ॥

तान्वारय महाबाहो केकयाँश्च नरोत्तम ।
पुरा कुर्वन्ति निःशेषं रक्ष्यमाणाः किरीटिना ॥९३॥

पदानि-तान् । वारय । महाबाहो । केकयान् । च । नरोत्तम । पुरा । कुर्वन्ति । निःशेषं । रक्ष्यमाणाः । किरीटिना ॥

अन्वयः–हे महाबाहो नरोत्तम ! किरीटिना रक्ष्यमाणाः निःशेषं कुर्वन्ति पुरा तान् केकयान् च वारय ॥

अर्थ–हे महाबाहो मनुष्यश्रेष्ठ ! ( किरीटिना ) अर्जुनद्वारा रक्षित होकर ( मेरे सैन्यको ) समाप्त करनेसे पहलेही उन केकयोंका निवारण कर ॥

## पाठ १६

अश्वत्थामँस्त्वरायुक्तो याहि शीघ्रमरिन्दम ।
आदौ वा यदि वा पश्चात्तवेदं कर्म मारिप ॥९४॥

पदानि-अश्वत्थामन् । त्वरायुक्तः । याहि । शीघ्रम् । अरिन्दम ॥ आदौ । वा । यदि । वा । पश्चात् । तव । इदम् । कर्म । मारिप ॥

अन्वयः-- हे अरिन्दम अश्वत्थामन् ! त्वरायुक्तः याहि हे मारिप ! आदौ वा यदि वा पश्चात् इदं तव कर्म ।

अर्थ-- हे शत्रुनाशक अश्वत्थामा ! त्वरासे युक्त होकर आगे बढ । हे श्रेष्ठ ! पहले अथवा पीछेसे यह तेरा कर्म है ॥

त्वमुत्पन्नो महाबाहो पञ्चालानां वधं प्रति ।
करिष्यसि जगत्सर्वमपञ्चालं किलोद्यतः ॥ ९५ ॥

पदानि-त्वम् । उत्पन्नः । महाबाहो । पञ्चालानाम् । वधम् । प्रति ॥ करिष्यसि । जगत् । सर्वम् । अपञ्चालम् । किल । उद्यतः ।

अन्वयः- हे महाबाहो ! त्वं पञ्चालानां वधं प्रति उत्पन्नः उद्यतः किल त्वं सर्वं जगत् अपञ्चालं करिष्यसि ।

अर्थ- हे महाबाहो ! तूं पंचालोंके वधके लिये उत्पन्न हुआ है । यदि तू उद्यत हुआ तो सब जगत्को पञ्चाल योद्धाओंसे रहित करेगा ॥

एवं सिद्धाऽब्रुवन्वाचो भविष्यति च तत्तथा।
तस्मात्त्वं पुरुषव्याघ्र पञ्चालाञ्जहि सानुगान् ॥९६॥

पदानि-एवम् । सिद्धाः । अब्रुवन् । वाचः । भविष्यति । च । तत् । तथा । तस्मात् । त्वम् । पुरुषव्याघ्र । पञ्चालान् । जहि । सानुगान् ॥

अन्वयः- एवं वाचः सिद्धाः अब्रुवन् । तत् च तथा भविष्यति । हे पुरुषव्याघ्र ! तस्मात् त्वं सानुगान् पञ्चालान् जहि ॥

अर्थ--इस प्रकारका भाषण सिद्ध लोगोंने किया था । वह वैसाही होगा । हे पुरुषश्रेष्ठ ! इसलिये तू अनुयायियोंके सहित पञ्चालोंका नाश कर ॥

न तेऽस्त्रगोचरे शक्ताः स्थातुं देवाः सवासवाः ।
किमु पार्थाः सपञ्चालाः सत्यमेतद्ब्रवीमि ते ॥९७॥

पदानि-ते । अस्त्रगोचरे । शक्ताः । स्थातुम् । देवाः । सवासवाः । किम् । उ । पार्थाः । सपञ्चालाः । सत्यम् । एतत् । ब्रवीमि । ते ॥

अन्वयः-सवासवाः देवाः ते अस्त्रगोचरे स्थातुं न शक्ताः किमु सपञ्चालाः पार्थाः ? एतत्ते सत्यं ब्रवीमि ॥

अर्थ-इन्द्रसहित देव तेरे अस्त्रोंके सम्मुख ठहर नहीं सकते । फिर पाञ्चालोंके समेत पांडव कैसे ठहरेंगे ? यह तुझे सत्य कहता हूं ॥

न त्वां समर्थाः संग्रामे पाण्डवाः सह सोमकैः ।
बलाद्योधयितुं वीर सत्यमेतद्ब्रवीमि ते ॥ ९८ ॥

पदानि-न । त्वाम् । समर्थाः । संग्रामे । पाण्डवाः । सह । सोमकैः। बलात् । योधयितुम् । वीर । सत्यम् । एतत् । ब्रवीमि । ते ।

अन्वयः—हे वीर सोमकैः सह पाण्डवाः संग्रामे त्वां बलात् योधयितुं न समर्थाः एतत् ते सत्यं ब्रवीमि ॥

अर्थ—हे वीर ! सोमकोंसे युक्त पाण्डव सग्राममें तेरे साथ बलसे युद्ध करनेके लिये समर्थ नहीं हैं । यह तुझे मैं सत्य कहता हूं ॥

गच्छ गच्छ महाबाहो न नः कालात्ययो भवेत् ।
इयं हि द्रवते सेना पार्थसायकपीडिता ॥ ९९ ॥

पदानि- गच्छ । गच्छ । महाबाहो । न । नः । कालात्ययः । भवेत् । इयम् । हि । द्रवते । सेना । पार्थसायकपीडिता ।

अन्वयः—हे महाबाहो ! गच्छ गच्छ । कालात्ययः नः न भवेत् पार्थसायकपीडिता हि इयं सेना द्रवते ॥

अर्थ—हे महाबाहो ! बढ, आगे बढ । हमारे लिये देरी न होवे । क्योंकि अर्जुनके बाणोंसे पीडित हुई यह सेना भाग रही है ॥

संधि किये हुए वाक्य

हे द्विजोत्तम ! आचार्यः पाण्डुपुत्रान्वै पुत्रवत्परिरक्षति । त्वमपि तेषु नित्यमुपेक्षां कुरुषे । मम वा

मन्दभाग्यत्वाद्युधि ते विक्रमो मन्दः। धर्मराजप्रियार्थं वा द्रौपद्या वा प्रियार्थं न तद्वयं विद्मः। मम लुब्धस्य धिगस्तु। यत्कृते सुखार्हा अपराजिताः सर्वबान्धवाः परम दुःखं प्राप्नुवन्ति। को हि शस्त्रविदां मुख्यो युधि महेश्वरसमः शक्तः शत्रुं न क्षपयेद्यो गौतमीसुतः न स्यात्। हे अश्वत्थामन्! प्रसीदस्व। एतान्ममाहितान्नाशय। देवा दानवा वा तवास्त्रगोचरे स्थातुं न शक्ताः। हे द्रौणे! सहानुगान्पञ्चालान्सोमकांश्चैव जहि। त्वया परिरक्षिता वयं शेषान्हनिष्यामः। हे विप्र! एते हि सोमका यशस्विनः पञ्चालाश्च संक्रुद्धा मम सैन्येषु दावाग्निवद्विचरन्ति। हे महाबाहो नरोत्तम! किरिटिना रक्ष्यमाणास्ते मम सैन्यं निःशेषं करिष्यन्ति, तत्पूर्वं तान् केकयाँश्च वारय।

हे अरिन्दम अश्वत्थामन्! त्वरायुक्तो याहि। आदौ वा यदि वा पश्चादिदं तव कर्म। हे महाबाहो! त्वं पञ्चालानां वधं प्रत्युत्पन्नः। त्वमुद्यतः किल सर्वं जगदपञ्चालं करिष्यसि। एवं वाचः सिद्धाः अब्रुवन्। तच्च तथा भविष्यति। हे पुरुषव्याघ्र! तस्मात्त्वं सानुगान्पञ्चालान् जहि। स-वासवा देवास्तेऽस्त्रगोचरे स्थातुं न शक्ताः। किमु सपञ्चालाः पार्थाः?

अंक ५



# संस्कृत-पाठ-माला ।

(संस्कृत-भाषाका अध्ययन करनेका सुगम उपाय)

## भाग ५ वाँ ।


लेखक

पं. श्रीपाद दामोदर सातवळेकर,

स्वाध्याय-मंडल, किल्ला पारडी, (जि० सूरत)



प्रथम वार

संवत् २००९ शक १८७४ सन् १९५२

मूल्य ८ आने ।

# ध्यान दीजिये ।

---

इस पुस्तकमें पदच्छेदपूर्वक संस्कृतके पाठ प्रथम दिये हैं और पश्चात् उसीका संधिके साथ सरल संस्कृत दिया है।

दोनोंकी तुलना करके पाठक यदि अभ्यास करेंगे, तो उनको अतिसुगमतासे संधि विषयका ज्ञान हो सकता है।

इसमें जो संस्कृत वाक्य दिये हैं, फुरसतके समय उनका वारंवार पाठ करनेसे बहुतही लाभ हो सकता है।

इसमें जो श्लोक दिये हैं उनका भी पाठ अनेक वार करनेसे संस्कृत–भाषामें प्रवेश होनेमें सुगमता हो सकती है।

स्वाध्याय-मण्डल
'आनन्दाश्रम'
पारडी ( जि० सूरत )

लेखक
पं. श्रीपाद दामोदर सातवळेकर
अध्यक्ष—स्वाध्याय-मण्डल

---

मुद्रक और प्रकाशक- व० श्री० सातवळेकर, बी ए.
भारत-मुद्रणालय, पारडी ( जि. सूरत )

ॐ

# संस्कृत-पाठ-माला।

## पंचम भाग।

### पाठ १

हे अर्जुन! त्वं स्वधर्मं अवेक्ष्य विकंपितुं न अर्हसि। हे पार्थ! त्वं क्षत्रियः असि। तव क्षत्रियस्य धर्मः एव युद्धं कर्तव्यम्। अतः त्वं स्वधर्मं क्षात्रधर्मं च अवेक्ष्य एवं विकंपितुं न योग्यः।

क्षत्रियस्य श्रेयः धर्म्यात् युद्धात् अन्यत् किं अपि न वर्तते। यदा क्षत्रियः धर्म्यं युद्धं करोति तदा एव सः श्रेयः प्राप्नोति। यदि सः एव क्षत्रियः युद्धात् पलायनं करिष्यति, तर्हि सः श्रेयः नैव प्राप्स्यति।

युद्धं स्वर्गस्य द्वारं एव अस्ति। यः क्षत्रियः धर्म्यं युद्धं करोति, स तेन एव द्वारेण स्वर्गं गच्छति। यदि स युद्धे मृतः भवति तर्हि स स्वर्गं गच्छति, यदि न मृतः, विजयं प्राप्तः, तर्हि राज्यं प्राप्नोति।

अतः क्षत्रियः ईदृशं युद्धं सुखेन करोति। तेन

स्वर्गं भूमिराज्यं वा प्राप्नोति। परंतु यः भीरुः पुरुषः युद्धं कर्तुं न समर्थः, सः न स्वर्गं प्राप्नोति। न अपि अत्र भूमिराज्यं प्राप्नोति।

हे अर्जुन ! यदि त्वं धर्म्यं युद्धं न करिष्यासि तर्हि स्वधर्मं हित्वा, कीर्तिं च हित्वा पापं एव अवाप्स्यासि । *यदा क्षत्रियः धर्म्यं अपि युद्धं न एव करोति,* तदा सः पापयुक्तः भवति।

प्रभविष्णुः क्षत्रियः सदा युद्धाय सिद्धः भवति। भो शिष्य ! किं क्षत्रियः एव युद्धं करोति ? न अन्यः कः अपि युद्धं करोति ?

क्षत्रियः शस्त्रेण युद्धं करोति तथा ब्राह्मणः अपि शब्देन युद्धं करोति, तत् ब्राह्मणस्य युद्धं वाग्युद्धं इति उच्यते।

वैश्यः अपि वाणिज्ययुद्धं करोति । शूद्रः अपि स्वकर्तव्येन युद्धं करोति एव। सर्वः अपि जनः एवं युद्धं करोति। युद्धेन विना जीवनं अपि न भवति। यः युद्धं न करोति तस्य अकीर्तिः भवति।

संभावितस्य अकीर्तिः मरणात् अपि अतिरिच्यते। यदा क्षत्रियः भयात् रणात् उपरतः भवति, तदा तस्य सर्वत्र अकीर्तिः एव भवति।

---

## पाठ २

यः क्षत्रियः धर्मेण राज्यं रक्षति, राज्यस्य रक्षणार्थं च धर्म्यं युद्धं करोति, स एव क्षत्रियः यशस्वी कीर्तियुक्तः च भवति। न अन्यः। उदधेः जलं स्नानाय योग्यं भवति। उदधेः जलस्य स्नानेन शरीरस्य आरोग्यं भवति। तेन स्नानेन शरीरस्य रोगः अपि दूरं गच्छति।

एकः रथः भूमिमार्गेण गच्छति सः रथः इति उच्यते। अन्यः रथः जलमार्गेण गच्छति स जलरथः इति उच्यते। तृतीयः रथः आकाशमार्गेण गच्छति स विमानः इति उच्यते। भूपतिः प्रजापालनेन यशं इच्छति। ब्राह्मणः ज्ञानवर्धनेन श्रेयः वाञ्छति। वैश्यः धनवर्धनेन ऐश्वर्यं कांक्षति। शूद्रः कर्मणा उत्कर्षं प्राप्नोति। सर्वः अपि जनः स्वकर्मणा एव यशस्वी भवति। न तु उद्योगं त्यक्त्वा सिद्धिं कः अपि प्राप्नोति। ईश्वरः हृदयदेशे तिष्ठति। तं यदि त्वं शरणं गच्छसि तर्हि सः एव त्वां स्वर्गं नेष्यति।

यथा दिनसमये भानोः प्रकाशः भवति तथा रात्रिसमये सोमस्य प्रकाशः भवति। सूर्यस्य उष्णः प्रकाशः तथा सोमस्य शीतः प्रकाशः अस्ति।

स्वस्य धर्मः स्वधर्मः। स्वस्य यः धर्मः अस्ति सः

एव तस्य स्वधर्मः भवति । ज्ञानार्जनं ब्राह्मणस्य स्वधर्मः । प्रजापालनं क्षत्रियस्य स्वधर्मः । वाणिज्यं गोपालनं च वैश्यस्य स्वधर्मः । शूद्रस्य अपि सेवाकर्म एव स्वधर्मः अस्ति । यः स्वधर्मं पालयति सः एव उत्कर्षं प्राप्नोति न अन्यः । तस्य एव सर्वत्र कीर्तिः भवति न अन्यस्य । सः एव उत्तमं यशः प्राप्नोति न अन्यः ।

संधि किये हुए वाक्य ।

हे अर्जुन ! त्वं स्वधर्ममवेक्ष्य विकंपितुं नार्हसि । हे पार्थ ! त्वं क्षत्रियोऽसि । तव क्षत्रियस्य धर्मं एव युद्धं कर्तव्यम् । अतस्त्वं स्वधर्मं क्षात्रधर्मं चावेक्ष्यैवं कंपितुं न योग्यः ।

क्षत्रियस्य श्रेयो धर्म्याद्युद्धादन्यत्किमपि न वर्तते । यदा क्षत्रियो धर्म्यं युद्धं करोति तदैव स श्रेयः प्राप्नोति । यदि स एव क्षत्रियो युद्धात्पलायनं करिष्यति तर्हि स श्रेयो नैव प्राप्स्यति ।

युद्धं स्वर्गस्य द्वारमेवास्ति । यः क्षत्रियो धर्म्यं युद्धं करोति स तेनैव द्वारेण स्वर्गं गच्छति । यदि स युद्धे मृतो भवति तर्हि स स्वर्गं गच्छति, यदि न मृतो, विजयं प्राप्तस्तर्हि राज्यं प्राप्नोति ।

## पाठ ३

इस पाठमें निम्नलिखित श्लोक पढ़िये—

यद्यदाचरति श्रेष्ठस्तत्तदेवेतरो जनः ।
स यत्प्रमाणं कुरुते लोकस्तदनुवर्तते ॥

( भ० गीता. ३।२१ )

पदानि-यत् । यत् । आचरति । श्रेष्ठः । तत् । तत् । एव । इतरः । जनः । सः । यत् । प्रमाणं । कुरुते । लोकः । तत् । अनुवर्तते ।

अन्वयः-श्रेष्ठः यत् यत् आचरति, तत् तत् इतरः जनः । सः यत् प्रमाणं कुरुते, लोकः तत् अनुवर्तते ॥

अर्थ-श्रेष्ठ मनुष्य जैसा जैसा आचरण करता है वैसा वैसा इतर मनुष्य [ करता है, ] वह जो जो प्रमाण (कुरुते) करता अर्थात् मानता है, लोक वैसाही अनुकरण करते हैं ।

*उद्धरेदात्मनात्मानं नात्मानमवसादयेत् ।*
आत्मैव ह्यात्मनो बंधुरात्मैव रिपुरात्मनः ॥

( भ० गीता ६।५ )

पदानि– उद्धरेत् । आत्मना । आत्मान । न । आत्मान । अवसादयेत् । आत्मा । एव । हि । आत्मनः । बंधुः । आत्मा । एव । रिपुः । आत्मनः ॥

अन्वयः-आत्मना आत्मानं उद्धरेत् । आत्मानं न अवसादयेत् ।आत्मा एव हिआत्मनः बंधुःआत्मा एव आत्मनः रिपुः

अर्थ-( आत्मना ) आप (आत्मानं) अपना उद्धार करें। अपनेको न गिरावे। क्योंकि आप ही अपना बंधु और आप ही अपना ( रिपुः ) शत्रु है।

असंशयं महाबाहो मनो दुर्निग्रहं चलम्।
अभ्यासेन तु कौन्तेय वैराग्येण च गृह्यते ॥
( भ० गीता ६।५ )

पदानि-अ+संशयं। महा+बाहो। मनः। दुर्निग्रहं। चलम्। अभ्यासेन। तु। कौन्तेय। वैराग्येण। च। गृह्यते ॥

अन्वयः—हे महाबाहो! मनः असंशयं दुर्निग्रहं चलम्। हे कौन्तेय! अभ्यासेन वैराग्येण च गृह्यते ॥

अर्थ-हे (महाबाहो) बडे बाहुवाले वीर! मन निःसंदेह (दु+निग्रहं) निग्रह करनेके लिये कठिन और (चलं) चंचल है। हे (कौन्तेय) कुंतीके पुत्र! उसका (अभ्यासेन) प्रयत्न और वैराग्यसे ( गृह्यते ) निग्रह किया जाता है।

कालोऽस्मि लोकक्षयकृत्प्रवृद्धो
लोकान्समाहर्तुमिह प्रवृत्तः।
ऋतेऽपि त्वां न भविष्यन्ति सर्वे
येऽवस्थिताः प्रत्यनीकेषु वीराः ॥
( भ० गीता ११।३२ )

पदानि-कालः। अस्मि। लोक+क्षय+कृत्। प्र+वृद्धः। लोकान्।

सं-आहर्तुं। इह। प्रवृत्तः। ऋते। अपि। त्वां। न। भविष्य-न्ति। सर्वे। ये। अवस्थिताः। प्रत्यनीकेषु। वीराः॥

अन्वयः-लोकक्षयकृत् प्रवृद्धः कालः अस्मि। इह लोकान् समाहर्तुं प्रवृत्तः। त्वां ऋते अपि सर्वे न भविष्यन्ति। ये वीराः प्रत्यनीकेषु अवस्थिताः॥

अर्थ-मैं लोगोंका क्षय करनेवाला ( प्रवृत्तः ) बढा हुआ ( अस्मि ) हूं। (इह) यहां लोकोंका (समाहर्तुं) संहार करनेके लिये प्रवृत्त [हुआ हूं!] ( त्वां ऋते ) तेरे विना भी ये सब नहीं रहेंगे, (ये) जो वीर ( प्रत्यनीकेषु ) शत्रुओंकी सेनाओंमें ( अवस्थिताः ) खडे रहे हैं।

तस्मात्त्वमुत्तिष्ठ यशो लभस्व
जित्वा शत्रून्भुंक्ष्व राज्यं समृद्धम्।
मयैवैते निहताः पूर्वमेव
निमित्तमात्रं भव सव्यसाचिन् ॥ ३३ ॥

पदानि-तस्मात्। त्वं। उत्तिष्ठ। यशः। लभस्व। जित्वा। शत्रून्। भुंक्ष्व। राज्यं। समृद्धं। मया। एव। एते। निहताः। पूर्वं। एव। निमित्त+मात्रं। भव। सव्य+साचिन्॥

अन्वयः-हे सव्यसाचिन्! तस्मात् त्वं उत्तिष्ठ, यशः लभस्व, शत्रून् जित्वा समृद्धं राज्यं भुंक्ष्व। एते मया पूर्वं एव निहताः। त्वं निमित्तमात्रं भव॥

अर्थ-हे ( सव्यसाचिन् ) अर्जुन! इसलिये तू उठ, यश

( लभस्व ) लाभ कर, शत्रुओंको जीत करके समृद्ध राज्यका (भुंक्ष्व) उपभोग कर । (एते) ये मैंने पहिले ही (निहताः) मारे गये हैं। तू निमित्तके लिये ( भव ) हो ॥

इस पाठमें जो श्लोक दिये हैं उनका अभ्यास करनेके पश्चात् प्रत्येक श्लोकके पद, अन्वय और अर्थ मनसेही कीजिये। और जो अशुद्धि प्रतीत होगी उसे ठीक कीजिये । कागजपर लिखने की आवश्यकता नहीं है। श्लोक देखकर यह कार्य मनसेभी किया जा सकता है, और जो अभ्यास इस प्रकार होगा वही विशेष उपयोगी होगा। यदि आप इस रीतिसे अभ्यास करेंगे तो आपकी प्रगति संस्कृतमें निःसंदेह शीघ्रही होगा।

संधि किये हुए वाक्य ।

अतः क्षत्रियः ईदृशं युद्धं सुखेन करोति। तेन स्वर्गं भूमिराज्यं वा प्राप्नोति। परंतु यो भीरुः पुरुषो युद्धं कर्तुं न समर्थः सः न स्वर्गं प्राप्नोति। नाप्यत्र भूमिराज्यं प्राप्नोति ।

हे अर्जुन! यदि त्वं धर्म्यं युद्धं न करिष्यसि, तर्हि स्वधर्मं हित्वा, कीर्तिं च हित्वा पापमेवावाप्स्यसि। यदा क्षत्रियो धर्म्यमपि युद्धं नैव करोति, तदा स पापयुक्तो भवति ।

प्रभविष्णुः क्षत्रियः सदा युद्धाय सिद्धो भवति। भो शिष्य ! किं क्षत्रिय एव युद्धं करोति ? १



## पाठ ४

श्रेष्ठः उत्तमः मनुष्यः यत् यत् आचरति तत् तत् एव इतरः जनः आचरति। यत् यत् एव नृपः आचरति तत् तत् एव प्रजाजनः आचरति । विद्वान् आचरति तथा एव साधारणः जनः आचरति। यथा त्वं आचरसि तथा एव अहं आचरामि । यथा अहं आचरामि तथा त्वं न आचरसि ।

सः श्रेष्ठः उत्तमः पुरुषः यत् यत् प्रमाणं कुरुते तत् तत् एव लोकः अनुवर्तते । यत् यत् भूपतिः प्रमाणं कुरुते तत् तत् एव प्रजाजनः अनुवर्तते। विद्वान् यत् यत् प्रमाणं कुरुते साधारणः जनः तत् तत् एव अनुवर्तते ।

आत्मना आत्मानं उद्धरेत् सदा आत्मानं एवं आत्मना उद्धरेत् कदा अपि आत्मना आत्मानं न अवसादयेत् । मनुष्येन सदा तथा प्रयत्नः कर्तव्यः येन तस्य उद्धारः भविष्यति ।

आत्मा एव आत्मनः बंधुः भवति तथा आत्मनः शत्रुः अपि आत्मा एव भवति। यः स्वकर्तव्यं करोति सः एव आत्मनः बंधुः तथा यः स्वकर्तव्यं न करोति स एव आत्मनः शत्रुः भवति।

हे मनुष्य! मनः दुर्निग्रहं चलं च आस्ति इति असंशयं सत्यं एव अस्ति। परंतु तस्य निग्रहः अभ्यासेन वैराग्येण च भवति न अन्येन केन अपि कर्मणा भवति।

अहं लोकस्य क्षयकृत् कालः अस्मि। लोकान् समाहर्तुं इह अस्मिन् युद्धे प्रवृत्तः अस्मि। युद्धे सर्वस्य लोकस्य क्षयं कर्तुं इच्छामि। ये वीराः अस्मिन् युद्धे अत्र अवस्थिताःते सर्वे त्वां ऋते अपि न भाविष्यन्ति एव।

यः वीरः इदानीं युद्धे अवस्थितः स विजयं प्राप्स्यति। यः धीरः पुरुषः युद्धं करोति सः अवश्यं विजयं प्राप्नोति।

तस्मात् त्वं उत्तिष्ठ। हे वीर! इदानीं त्वं युद्धाय, उत्तिष्ठ, यशः च लभस्व। शत्रून् जित्वा समृद्धं राज्यं भुंक्ष्व।

एते वीरा मया एव पूर्वं निहताः। अतः त्वं निमित्तमात्रं भव।

क्षत्रस्य धर्मस्य तत्त्वं धर्म्यं युद्धं कर्तव्यं इति एव अस्ति। अतः धर्म्यात् युद्धात् पलायनं क्षत्रियाय नः योग्यं भवति।

तस्य क्षत्रियस्य किं नगरं अस्ति? सः वीर-

क्षत्रियः वीरपुरे नगरे निवसति। तस्मात् नगरात् सः इदानीं एव अत्र आगतः। सः किमर्थं अत्र आगतः ? स कदा अस्मात् नगरात् स्वनगरं गमिष्यति इति त्वं जानासि किम् ?

आदौ वीरेण इंद्रियाणि संयम्य शत्रुणा सह अवश्यं युद्धं कर्तव्यम्। यः वीरः निर्मलः निश्चलः निर्विकारः नित्यपूतः निस्पृहः निर्मोहः सः एव प्रशंसनीयः। स एव युद्धे विजयं प्राप्नोति।

सूचना—यदि पाठक ये वाक्य सुगमतासे समझ जायगे तो ठीक ही है। परंतु यदि ये वाक्य उनके समझमें न आये, तो उनको पूर्वभाग अर्थात् चतुर्थ पुस्तक पुनः देखनी चाहिये।

पाठक स्वयं अनुभव करेंगेही कि जो पढनेवाले इस पद्धतिसे नियमपूर्वक अभ्यास कर रहे हैं उनकी उन्नति कितनी हो रही है। अल्पपरिश्रमसे उनको संस्कृतका कितना अधिक ज्ञान हो रहा है। अब पाठक बहुतसे वाक्य बोल सकते हैं, बहुतसे वाक्य लिख सकते हैं तथा सुगम श्लोक भी समझ सकते हैं।

पाठकोंको एक सूचना करनी चाहिये। वह यह है कि वे पहिला पाठ कच्चा रखकर आगे बढनेका प्रयत्न न करें, देर लगी तो भी पर्वाह नहीं है, परतु पहिले पाठ पक्के करके ही आगे बढनेका यत्न करें।

---

## पाठ ५

दुष्यन्तस्तु ततो राजा पुत्रं शाकुंतलं तदा ।
भरतं नामतः कृत्वा यौवराज्येऽभ्यषेचयत ॥
( म. भा. आदि. ७४।१२९ )

अन्वयः—ततः दुष्यन्तः राजा तु तदा शाकुंतलं पुत्रं नामतः भरतं कृत्वा यौवराज्ये अभ्यषेचयत् ॥

अर्थः- पश्चात् दुष्यन्त राजाने तो तब (शाकुंतलं) शकुंतलाके पुत्रको नामसे भरत करके यौवराज्यमें अभिषेक किया।

तस्य तत्प्रथितं चक्रं प्रावर्तत महात्मनः ।
भास्वरं दिव्यमजितं लोकसंनादनं महत् ॥१३०॥

अन्वयः- तस्य महात्मनः महत् लोकसंनादनं अजितं दिव्यं भास्वरं प्रथितं चक्रं प्रावर्तत ॥

अर्थ-उस महात्माका बडा लोकोंमें प्रख्यात अजेय दिव्य तेजस्वी प्रख्यात चक्र प्रवर्तित हुआ।

स विजित्य महीपालांश्चकार वशवर्तिनः ।
चचार च सतां धर्मं प्राप चानुत्तमं यशः ॥१३१ ॥

अन्वयः- स महीपालान् विजित्य, वशवर्तिनः चकार। सतां धर्मं च चचार। अनुत्तमं यशः च प्राप ॥

अर्थ--उसने महीपालोंको जीतकर, वशमें ( चकार ) कर लिया। सज्जनोंके धर्मका आचरण किया और (अनुत्तमं)

अर्थात् उत्तम यज्ञ ( प्राप ) प्राप्त किया ।

स राजा चक्रवर्त्यासीत्सार्वभौमः प्रतापवान्।
ईजे च बहुभिर्यज्ञैर्यथा शक्रो मरुत्पतिः॥ १३२ ॥

पदानि– सः । राजा । चक्रवर्ती । आसीत् । सार्वभौमः। प्रतापवान् । ईजे । च । बहुभिः । यज्ञैः । यथा । शक्रः । मरुत्+पतिः ॥

अन्वयः–सः राजा प्रतापवान् सार्वभौमः चक्रवर्ती आसीत्। यथा मरुत्पतिः शक्रः [ तथा सः ] बहुभिः यज्ञैः ईजे ॥

अर्थ–वह राजा प्रतापी सार्वभौम और चक्रवर्ती था। जैसा मरुतोंका राजा ( शक्र ) इंद्र उस प्रकार बहुत यज्ञोंसे ( ईजे ) यज्ञ करता रहा ।

याजयामास तं कण्वो विधिवद्भूरिदक्षिणम्।
श्रीमान्गोविततं नाम वाजिमेधमवाप सः ॥१३३॥

अन्वयः–तं कण्वः विधिवत् याजयामास । भूरि+दक्षिणं गोविततं नाम वाजिमेधं सः श्रीमान् अवाप ॥

अर्थ–उनसे कण्वने विधियुक्त यज्ञ कराया । बहुत दाक्षि-णावाले गोवितत नामक अश्वमेधको उस श्रीमानने (अवाप) प्राप्त किया अर्थात् यज्ञ किया ।

यस्मिन्सहस्रं पद्मानां कण्वाय भरतो ददौ।
भरताद्भारती कीर्तिर्येनेदं भारतं कुलम् ॥ १३४॥

अन्वयः–यस्मिन् भरतः पद्मानां सहस्रं कण्वाय ददौ ।

भरतात् भारती कीर्तिः, येन इदं भारतं कुलम्।

अर्थ--जिसमें भरतने सहस्र पद्म कण्वको दान दिये। भरतसे भारतकी कीर्ति हुई, जिससे यह भारत कुल हुआ॥

अपरे ये च पूर्वे वै भारता इति विश्रुताः।
भरतस्यान्ववाये हि देवकल्पा महौजसः॥ १३५॥

अन्वयः-- भरतस्य अन्ववाये हि महौजसः देवकल्पाः अपरे ये च पूर्वे वै भारताः इति विश्रुताः।

अर्थ-- भरतके ( अन्ववाये ) गोत्रमें ही महातेजस्वी देवों के समान पहिले और पूर्वके सब भारत ( इति ) इस नामसे ( विश्रुताः ) प्रसिद्ध हुए हैं॥

बभूवुर्ब्रह्मकल्पाश्च बहवो राजसत्तमाः।
येषामपरिमेयानि नामधेयानि सर्वशः॥ १३६॥

अन्वयः--बहवः राजसत्तमाः ब्रह्मकल्पाः बभूवुः येषां सर्वशः नामधेयानि अपरिमेयानि॥

अर्थ--बहुत राजश्रेष्ठ पुरुप ( ब्रह्मकल्पाः ) ब्राह्मण जैसे ( बभूवुः ) हुए जिनके सबोंके नाम अपरिमित हैं।

ततः स नृपशार्दूल पूरूं राज्येऽभिषिच्य च।
तपः सुचरितं कृत्वा भृगुतुंगे महातपाः॥ ५७॥

अन्वयः-- हे नृपशार्दूल! ततः पूरूं राज्ये अभिषिच्य सः महातपाः भृगुतुंगे सुचरितं तपः कृत्वा॥

अर्थ--हे नृपश्रेष्ठ ! पश्चात् पुरुको राज्यपर अभिषेक कर उस महातपस्वीने भृगुतुंग पर्वतपर उत्तम तप करके ॥

कालेन महता पश्चात्कालधर्ममुपेयिवान् ॥
कारयित्वा त्वनशनं सदारः स्वर्गमाप्तवान् ॥५०॥

अन्वयः---पश्चात् महता कालेन कालधर्मं उपेयिवान्। स-दारः तु अनशनं कारयित्वा स्वर्गं आप्तवान् ॥

अर्थ—पश्चात् बडे समयके नंतर ( कालधर्मं ) मृत्युको ( उपेयिवान् ) प्राप्त हुआ। ( स-दारः ) स्त्रीसहित ( अनशनं ) उपवासका व्रत करके स्वर्गको (आप्तवान्) प्राप्त हुआ।

पाठ समाप्तिके पश्चात् पाठक श्लोकोंको वारंवार पढें। स्मरण रखें कि श्लोकोंको वारंवार पढनेसे ही पाठकोंका प्रवेश संस्कृतमें अतिशीघ्र होगा। इसलिये इस विषयमें असावधानी होने न दें।

संधि किये हुए वाक्य।

श्रेष्ठ उत्तमो मनुष्यो यद्यदाचरति तत्तदेवेतरो जन आचरति। यद्यन्नृप आचरति तत्तदेव प्रजाजन आचरति। यथा विद्वानाचरति तथैव साधारणो जन आचरति। यथा त्वमाचरसि तथा एवाहमाचरामि। यथाऽहमाचरामि तथा त्वं नाचरसि।

## पाठ ६

अब इस पाठमें पूर्ववत् पूर्वपाठोंके संस्कृत-वाक्योंके संधि बनाकर सरल संस्कृत लिखा जाता है। पाठक इसका अभ्यास वैसाही करें।

संस्कृत—वाचन—पाठः।

रामं रजोमेघेन सा ताटिका राक्षसी मुहूर्तं व्यमोहयत्। परंतु पश्चात्तां ताटिकां रामः शरेणोरसि विव्याध। तेन सा पपात ममार च।

ततस्ताटिकावधेन तुष्टो मुनिवरो विश्वामित्रो राममुवाच। हे राजपुत्र! सर्वथा परितुष्टोऽस्मि तेऽनेन शौर्येण। अतस्ते सर्वाण्यप्यस्त्राणि प्रीत्या प्रयच्छामि। तैरस्त्रैः समन्वितो युद्धे शत्रूञ्जेष्यसि। इत्युक्त्वा स विप्रो रामाय तानि सर्वाण्येवास्त्राणि न्यवेदयत्।

ततः स विश्वामित्रो रामं लक्ष्मणं च गृहीत्वा स्वकीयं सिद्धाश्रमं प्राविशत्।

तत्र मुहूर्तं विश्रान्तौ रामलक्ष्मणौ मुनिश्रेष्ठो यज्ञदीक्षां प्रविशत्विति तमनुपयन्धतुः। तच्छ्रुत्वा सर्वेऽपि मुनयो रामलक्ष्मणौ प्रशशंसुः।

अद्यप्रभृति षड्रात्रं रक्षतां युवामिति चोचुः। तावपि यत्तौ षड्रात्रं तपोवनमरक्षताम्।

षष्ठ्यां रात्रौ मायां कुर्वाणौ राक्षसावभ्यधावताम्। परमक्रुद्धो रामो मारीचस्य राक्षस्योरसि मानवमस्त्रं चिक्षेप।

तेनास्त्रेण मारीचः सागरे क्षिप्तः। मारिचं सागरे क्षिप्तं दृष्ट्वा सुबाहोरुरस्याग्नेयमस्त्रं चिक्षेप।

सोऽपि सुबाहुरस्त्रेण विद्धो भुवि प्रापतत्। रामोऽपि वायव्यास्त्रेण शेषान् राक्षसाञ्जघान।

एवं निर्विघ्नतया समाप्ते यज्ञे विश्वामित्रो दिशो राक्षसहीना दृष्ट्वा राममब्रवीत्।

कृतार्थोऽस्मि महाबाहो!

मिथिलोपवने तु तत्र निर्जनमाश्रमपदं दृष्ट्वा राघवः पप्रच्छ, कस्यायमाश्रमः?

विश्वामित्र उवाच—अत्र पुराऽहल्यासहितो गौतमस्तप आतिष्ठत्। एष गौतमस्य महर्षे रम्य आश्रम इति।

पाठक इसका अभ्यास करें। इसमें कोई कठिनता हुई तो पूर्व पाठके वाक्य ( भाग ४ में ) देखकर उसकी निवृत्ति करें।



## पाठ ७

अब पूर्वपाठके श्लोकोंका सरल संस्कृत नीचे दिया जाता है उसका भी उत्तम अभ्यास कीजिये—

ततो दुष्यन्तः राजा तु तदा शाकुन्तलं पुत्रं नामतो भरतं कृत्वा यौवराज्येऽभ्यषेचयत्।

तस्य महात्मनो महल्लोकसंनादनमाजितं दिव्यं भास्वरं प्रथितं चक्रं प्रावर्तत। स महीपालान्विजित्य वशवर्तिनश्चकार। सतां धर्मं च चचार। अनुत्तमं यशश्च प्राप। स राजा प्रतापवान्सार्वभौमश्चक्रवर्ती आसीत्। यथा मरुत्पतिः शक्रस्तथा स बहुभिर्यज्ञैर्येजे।

तं कण्वो विधिवद्याजयामास। भूरिदक्षिणं गोवितं नाम वाजिमेधं स श्रीमानवाप। यस्मिन्भरतः पद्मानां सहस्रं कण्वाय ददौ। भरताद्भारती कीर्तिर्येनेदं भारतं कुलम्।

भरतस्यान्ववाये हि महौजसो देवकल्पा अपरे ये च पूर्वे ये भारता इति विश्रुताः। बहवो राजसत्तमा ब्रह्मकल्पा बभूवुः। येषां सर्वशो नामधेयानि अपरिमेयानि।

हे नृपशार्दूल! ततः पूरुं राज्येऽभिषिच्य स महातपाः भृगुतुंगे सुचरितं तपः कृत्वा, पश्चान्महता-

कालेन कालधर्ममुपेयिवान् ।

सदारस्त्वनशनं कारयित्वा स्वर्गमाप्तवान् ।

प्रश्नाः ।

१ ताटिका रामं कथं व्यमोहयत् ? २ पश्चाद्रामेण किं कृतम् ? ३ ताटिकावधेन कः तुष्टः ? ४ तुष्टेन विश्वामित्रेण रामाय किं दत्तम् ? ५ सिद्धाश्रमं गत्वा रामेण किं कृतम् ? ६ रामेण केन अस्त्रेण मारीचः हतः ? ७ रामः शेषान् राक्षसान् केन अस्त्रेण जघान ? ८ पश्चात् कस्याः आश्रमं रामः गतः ?

पाठक इन प्रश्नोंका उत्तर संस्कृतमेंही देनेका यत्न करें। पूर्व पाठ यदि ठीक हुआ होगा तो इन प्रश्नोंका उत्तर देना पाठकोंको कठिन नहीं प्रतीत होगा। इससे पाठकोंकी परीक्षा भी हो जायगी।

संधि किये हुए वाक्य ।

एते वीरा मयैव पूर्वं निहताः। अतस्त्वं निमित्तमात्रं भव। क्षत्रस्य धर्मस्य तत्त्वं धर्म्यं युद्धं कर्तव्यमित्येवास्ति। अतो धर्म्याद्युद्धात्पलायनं क्षत्रियाय न योग्यं भवति। तस्य क्षत्रियस्य किं नगरमस्ति ? स वीरः क्षत्रियो वीरपुरे निवसति। तस्मान्नगरात्स इदानीमेवात्रागतः। स किमर्थमत्रागतः ?

## पाठ ८

### संस्कृत-वाक्यानि ।

१ अत्र पुरा अहल्यासहितः महात्मा गौतमः ऋषिः तपः अतप्यत् । २ मुनिवेषधरः इन्द्रः गौतमस्य आश्रमं एकदा आजगाम । ३ तव संगं इच्छामि इति सः अहल्यां अब्रवीत् । ४ तस्मिन्काले गौतमः महा-मुनिः स्वकीयं आश्रमं प्रविवेश । ५ तदा इन्द्रः विपण्ण-वदनः च अभवत् । ६ तं तथा दृष्ट्वा मुनिः इन्द्रं शशाप । ७ भार्यां अपि ततो गौतमः शप्तवान् । ८ यदा रामः एतद्वनं आगमिष्यति तदा पूता भविष्यसि ।

### भाषा—वाक्य

१ यहां पूर्वकालमें अहल्याके सहित महात्मा गौतम ऋषि तप तपता रहा । २ मुनिवेष धारण कर इन्द्र गौतमके आश्रम-को एक समय आगया । ३ तेरे संगकी इच्छा करता हूं ऐसा वह अहल्यासे बोला । ४ उसी कालमें गौतम महा-मुनिने अपने आश्रममें प्रवेश किया । ५ तब इंद्र खिन्नवदन हुआ । ६ उसको वैसा देखकर मुनिने इंद्रको शाप दिया । ७ स्त्रीको भी पश्चात् गौतमने शाप दिया । ८ जब राम इस वनको आयेगा तब तू पवित्र होगी ।

संस्कृत-वाक्यानि।

९ हे राम ! इमं आश्रमं देवरूपिणीं अहल्यां च अधुना तारय। १० इति एवं विश्वामित्रस्य ऋषेः वचनं श्रुत्वा सलक्ष्मणः रामः आश्रमं प्रविवेश। ११ तत्र तपस्विनीं दीप्तां अहल्यां रामः ददर्श। १२ रामस्य दर्शनेन सा अहल्या पूता भूत्वा पूर्ववत् रूपसंपन्ना बभूव। १३ रामस्य दर्शनात् एव शापस्य अन्तं गता सा अहल्या। १४ गौतमवचनं स्मरन्ती सा अहल्या रामलक्ष्मणयोः पाद्यं अर्घ्यं आतिथ्यं च चकार।

भाषा—वाक्य।

९ हे राम ! इस आश्रमका तथा देवरूपिणी अहल्याका अब तारण कर। १० ऐसा यह विश्वामित्र ऋषिका वचन सुनकर लक्ष्मणसहित रामने आश्रममें प्रवेश किया। ११ वहां तपस्विनी तेजस्वी अहल्याको रामने देखा। १२ रामचंद्रके दर्शनसे वह अहल्या पवित्र होकर पूर्ववत् स्वरूपसे युक्त हो गई। १३ रामके दर्शनसेही शापके अंतको प्राप्त हुई वह अहल्या। १४ गौतम-मुनिका वचन स्मरण करती हुई वह अहल्या राम और लक्ष्मणको ( पाद्यं ) पांव धोनेके लिये जल ( अर्घ्यं ) पूजासाहित्य और ( आतिथ्यं ) आतिथि-सत्कार करने लगी।

## पाठ ९

### संस्कृत-वाक्यानि ।

१५ रामलक्ष्मणौ अपि तपोबलविशुद्धायाः तस्याः अहल्यायाः पादौ जगृहतुः। १६ गौतमः अपि तदा तत्र आगत्य रामं विधिवत संपूज्य पूर्ववत् तपः तेपे। १७ ततः रामः लक्ष्मणेन सह विश्वामित्रं पुरस्कृत्य उत्तरां दिशं प्रस्थितः। १८ मिथिलापतिः राजा जनकः तु तत् श्रुत्वा विनयेन सहसा प्रत्युज्जगाम। १९ तेन जनकेन दत्तं पूजार्घं प्रतिगृह्य विश्वामित्रः राज्ञः कुशलं यज्ञस्य च निर्विघ्नतां पप्रच्छ।

### भाषा-वाक्य ।

१५ राम और लक्ष्मणने भी तपके बलसे शुद्ध हुए उस अहल्याके पांव पकड लिये। १६ गौतम भी तब वहां आकर रामकी विधिवत् पूजा कर तप करने लगा। १७ तब राम लक्ष्मणके साथ विश्वामित्रको आगे रखकर उत्तर दिशाको चला। १८ मिथिलादेशका पालक राजा जनक यह श्रवण कर विनयसे तत्क्षणमेंही ( प्रत्युज्जगाम ) सन्मुख गया। १९. उस जनकने दिये पूजाअर्घ्यादिकका स्वीकार कर विश्वामित्रने राजाका कुशल और यज्ञकी निर्विघ्नता पूछी।

## संस्कृत-वाक्यानि ।

२० तत्सर्वं निवेद्य राजा अपि कृताञ्जलिः मुनिं पप्रच्छ कौ इमौ वीरौ पुत्रौ इति । २१ विश्वामित्रः अपि सर्वं पूर्वं वृत्तान्तं न्यवेदयत् । २२ ततः जनकः उवाच । धन्यः अनुगृहीतः च अस्मि ।

## भाषा-वाक्य ।

२० वह सब निवेदन कर राजा भी ( कृत-अञ्जलिः ) हाथ जोडकर मुनिसे पूछने लगा कि कौन ये वीर पुत्र हैं ? २१ विश्वामित्रने सब पूर्ववृत्तान्त निवेदन किया । २२ तब जनक बोला कि मैं धन्य और अनुगृहीत हूं ।

पाठक ये वाक्य वारंवार पढकर अच्छी प्रकार तैयार करें और अभ्यास ऐसा करें कि इस पाठमें कोई काठिनता न रहे । सावधानीके साथ अच्छा अभ्यास करें । कमसे कम यह पाठ वीस वार पढें ।

## संधि किये हुए वाक्य ।

तेन जनकेन दत्तं पूजार्घं प्रतिगृह्य विश्वामित्रो राज्ञः कुशलं यज्ञस्य च निर्विघ्नतां पप्रच्छ । तत्सर्वं निवेद्य राजापि कृताञ्जलिर्मुनिं पप्रच्छ काविमौ वीरौ पुत्रा- विति । विश्वामित्रोऽपि सर्वं पूर्वं वृत्तान्तं न्यवेदयत् । ततो जनक उवाच- धन्योऽनुगृहीतश्चास्मि ।

## पाठ १०

( महाभारत आदि० १४९ )

विदुरस्य सुहृत्कश्चित्खनकः कुशलो नरः ।
विविक्ते पाण्डवान्राजन्निदं वचनमब्रवीत् ॥ १ ॥

अन्वयः -हे राजन् ! कश्चित् नरः विदुरस्य सुहृत् कुशलः खनकः विविक्ते पाण्डवान् इदं वचनं अब्रवीत्॥

अर्थ—हे राजा ! कोई एक मनुष्य विदुरका ( सुहृत् ) मित्र कुशल ( खनकः ) सुरंग खोदनेवाला ( विविक्ते ) एकान्तमें पाण्डवोंको यह वचन बोला ।

प्रहितो विदुरेणास्मि खनकः कुशलो ह्यहम् ।
पाण्डवानां प्रियं कार्यमिति किं करवाणि वः ॥२॥

अन्वयः—अहं कुशलः खनकः विदुरेण प्रहितः अस्मि । वः पाण्डवानां किं प्रियं कार्यं करवाणि इति ।

अर्थ—मैं कुशल मिट्टी खोदनेवाला विदुरने भेजा हुआ हूं । ( वः ) आप पांडवोंका कौनसा प्रिय कार्य करूं ?

प्रच्छन्नं विदुरेणोक्तः श्रेयस्त्वमिह पाण्डवान् ।
प्रतिपादय विश्वासादिति किं करवाणि वः ॥ ३ ॥

अन्वयः—विदुरेण विश्वासात् प्रच्छन्नं उक्तः इह त्वं पाण्डवानां श्रेयः प्रतिपादय इति । वः किं करवाणि ?

अर्थ—विदुरने विश्वासके कारण ( प्रच्छन्नं ) गुप्तभावसे

कहा कि, यहां तू पांडवोंका हित ( प्रतिपादय ) कर, सो आपका क्या कार्य ( करवाणि ) करूं ?

कृष्णपक्षे चतुर्दश्यां रात्रावस्यां पुरोचनः।
भवनस्य तव द्वारि प्रदास्यति हुताशनम् ॥ ४ ॥

अन्वयः-कृष्णपक्षे अस्या चतुर्दश्यां रात्रौ पुरोचनः तव भवनस्य द्वारि हुताशनं प्रदास्यति ॥

अर्थ-कृष्णपक्षमें इस चतुर्दशी रात्रीमें पुरोचन तेरे गृहके द्वारमें ( हुताशनं ) अग्नि देगा अर्थात् घर जला देगा ॥

मात्रा सह प्रदग्धव्याः पांडवाः पुरुषर्षभाः।
इति व्यवसितं तस्य धार्तराष्ट्रस्य दुर्मतेः ॥ ५ ॥

अन्वयः—पुरुषर्षभाः पांडवाः मात्रा सह प्रदग्धव्याः इति तस्य दुर्मतेः धार्तराष्ट्रस्य व्यवसितम् ॥

अर्थ-( पुरुष-ऋषभाः ) पुरुषश्रेष्ठ पांडव ( मात्रा ) माताके साथ ( प्र-दग्धव्याः ) जलाये जांय यह उस दुष्ट-बुद्धि ( धार्तराष्ट्रस्य ) धृतराष्ट्रपुत्रका ( व्यवसित ) निश्चित किया हुआ है।

किञ्चिच्च विदुरेणोक्तो म्लेच्छवाचासि पांडव।
त्वया च तत्तथेत्युक्तमेतद्विश्वासकारणम् ॥ ६ ॥

अन्वयः-हे पांडव ! म्लेच्छवाचा विदुरेण किंचित् च उक्तः असि। तत् त्वया च तथा इति उक्तं एतत् विश्वासकारणम्।

अर्थ-हे पांडव ! ( म्लेच्छवाचा ) म्लेच्छ भाषाद्वारा विदुरने तुझे ( उक्तः ) कहा हुआ है । वह तूने भी ( तथा ) ठीक है ऐसा कहा ( एतत् ) यह विश्वासका हेतु है । [ अर्थात् इतना कहनेसे तेरा विश्वास मुझपर हो ]

उवाच तं सत्यधृतिः कुंतीपुत्रो युधिष्ठिरः ।
अभिजानामि सौम्य त्वां सुहृदं विदुरस्य वै ॥७॥

अन्वयः—सत्यधृतिः कुंतीपुत्रः युधिष्ठिरः तं उवाच । हे सौम्य ! त्वां विदुरस्य सुहृदं अभिजानामि ॥

अर्थ—( सत्यधृतिः ) धैर्यवाला कुंतीपुत्र युधिष्ठिर उससे बोला । हे ( सौम्य ) प्रिय ! तुझे विदुरका मित्र जानता हूं ।

शुचिं प्राप्तं प्रियं चैव सदा च दृढभक्तिकम् ।
न विद्यते कवेः किञ्चिदविज्ञातं प्रयोजनम् ॥ ८ ॥

अन्वयः-शुचिं प्रियं सदा दृढभक्तिकं प्राप्तं [ त्वां अभिजानामि ] कवेः अविज्ञातं किञ्चित् प्रयोजनं न विद्यते ॥

अर्थ-शुद्ध प्रिय सदा दृढभक्ति धरनेवाला तू प्राप्त हुआ है ऐसा मैं जानता हूं। (कवेः) कवि विदुरको अज्ञात कोई कार्य नहीं है । [ अर्थात् तुम जैसा करोगे वह उसको संमत होगा ]

इस पाठके श्लोकोंमें आये हुए संधियोंका विवरण—

१ कुशलो नरः = कुशलः नरः ।

२ राजन्निदं = राजन् इदं ।

३ प्रहितो विदुरेणास्मि = प्रहितः विदुरेण अस्मि ।
४ कुशलो ह्यहं = कुशलः हि अहम् ।
५ विदुरेणोक्तः = विदुरेण उक्तः ।
६ श्रेयस्त्वम् = श्रेयः त्वम् ।
७ विश्वासादिति = विश्वासात् इति ।
८ किञ्चिच्च = किञ्चित् च ।
९ तत्तथेत्युक्तमेतद्विश्वासकारणं = तत् तथा इति उक्तं एतत् विश्वास- कारणम् ।

पाठक इन संधियोंको पूर्व श्लोकोंमें देखें और जान लें कि ये संधि कैसे बने हैं ।

संधि किये हुए वाक्य ।

अत्र पुराऽहल्यासहितो महात्मा गौतम ऋषिस्तपोऽतप्यत् । मुनिवेषधर इन्द्रो गौतमस्याश्रममेकदा जगाम । तव संगमिच्छामीति सोऽहल्यामब्रवीत् । तस्मिन्काले गौतमोमहामुनिस्स्वकीयमाश्रमं प्रविवेश । तदेन्द्रो विषण्णवदनश्चाभवत् । तं तथा दृष्ट्वा मुनिरिन्द्रं शशाप । भार्यामपि तथा गौतमः शप्तवान् । यदा राम एतद्वनमागमिष्यति तदा पूता भविष्यसि । हे राम ! इममाश्रमं देवरूपिणीमहल्याश्चाधुना तारय ।

## पाठ ११

यदि आपने पूर्व दो पाठोंका अध्ययन ठीक प्रकार किया है तो निम्नलिखित वाक्य आपकी समझमें आ जांयगे।

संस्कृत—वाचन—पाठः।

पुराऽत्र महात्माऽहल्यासहितो गौतमऋषिस्तपोऽतप्यत्। इंद्रो मुनिवेषधरो गौतमस्याऽश्रममेकदाऽऽजगाम। तव संगमिच्छामीति सोऽहल्यामब्रवीत्। गौतमो महामुनिः स तस्मिन्काले प्रविवेश स्वकीयमाश्रमम्।

तदेन्द्रो विषण्णवदनश्चाभवत्। तथा तं दृष्ट्वा मुनिरिन्द्रं शशाप। ततो गौतमो भार्यामपि शप्तवान्। यदा राम एतद्वनमागमिष्यति पूता तदा भविष्यसि।

हे राम! इममाश्रमं देवरूपिणीमहल्यां चाधुना तारय। इत्येवं विश्वामित्रस्यपूर्ववचनं श्रुत्वा सलक्ष्मणो राम आश्रमं प्रविवेश। तत्र तपस्विनीं दीप्तामहल्यां रामो ददर्श। रामस्य दर्शनेन साऽहल्या पूता भूत्वा पूर्ववद्रूपसंपन्ना बभूव। रामस्य दर्शनादेव शापस्यान्तं गता साऽहल्या।

गौतमवचनं स्मरन्ती साऽहल्या रामलक्ष्मणयोः पाद्यमर्घ्यमातिथ्यं च चकार।

रामलक्ष्मणावपि तपोबलविशुद्धायास्तस्या अह-

ल्यायाः पादौ जगृहतुः।

गौतमोऽपि तदा तत्रागत्य रामं विधिवत् संपूज्य पूर्ववत्तपस्तेपे।

ततो रामो लक्ष्मणेन सह विश्वामित्रं पुरस्कृत्य उत्तरां दिशं प्रस्थितः।

मिथिलापती राजा जनकस्तु तच्छ्रुत्वा विनयेन सहसा प्रत्युज्जगाम। तेन जनकेन दत्तं पूजार्घं प्रतिगृह्य विश्वामित्रो राज्ञः कुशलं यज्ञस्य च निर्विघ्नतां पप्रच्छ।

तत्सर्वं निवेद्य राजाऽपि कृताञ्जलिर्मुनिं पप्रच्छ। काविमौ वीरपुत्राविति ? विश्वामित्रोऽपि सर्वं पूर्ववृत्तान्तं न्यवेदयत्। ततो जनक उवाच-' धन्योऽनुगृहीतश्चास्मि '।

पाठक इस सरल संस्कृतको पढें। यदि पूर्व पाठ ठीक हो चुके हैं तो यह पाठ विना परिश्रम समझमें आ जायगा। परंतु यदि किसी स्थानपर कुछ कठिनता प्रतीत हुई तो इसी पुस्तकका पाठ ६ देखें, उसमें इसीके वाक्य पदच्छेदपूर्वक दिये हैं। अब निम्न वाक्य पढिये—

कश्चिन्नरो विदुरस्य सुहृत्कुशलः खनको विविक्ते पांडवानिदं वचनमब्रवीत्। अहं कुशलः खनको

विदुरेण प्रहितोऽस्मि । वः पांडवानां किं प्रियं कार्यं करवाणीति ?

विदुरेण विश्वासात्प्रच्छन्नमुक्तः । इह त्वं पांडवानां श्रेयः प्रतिपादयेति । अधुना वः किं करवाणि ? कृष्ण पक्षे अस्यां चतुर्दश्यां रात्रौ पुरोचनस्तव भवनस्य द्वारि हुताशनं प्रदास्यति । पुरुषर्षभाः पांडवा मात्रा सह प्रदग्धव्या इति तस्य दुर्मतेर्धार्तराष्ट्रस्य व्यवस्थितम् ।

हे पाण्डव ! विदुरेण म्लेच्छवाचा किंचिच्च उक्तोऽसि । तत्त्वया च तथेत्युक्तमेतद्विश्वासकारणम् ।

सत्यधृतिः कुंतीपुत्रो युधिष्ठिरस्तमुवाच । हे सौम्य ! त्वां विदुरस्य सुहृदमभिजानामि । तथा शुचिं प्रियं सदा दृढभक्तिकं प्राप्तं त्वामभिजानामि । कवेरविज्ञातं किञ्चित्प्रयोजनं न विद्यते ।

यदि पूर्व पाठ ठीक हुआ है तो यह पाठ पाठकोंकी समझमें आ सकता है । यदि किसी स्थानपर संदेह हुआ तो इसी पुस्तकका पाठ १० देखें ।

यदि पाठक यह पाठ वारंवार पढेंगे तो केवल वारवार पढनेसेही संधिस्थान खोलने और उनका अर्थ जाननेकी विधि पाठकोंके मनमें स्वयं उपस्थित हो सकती है ।

एक एक पाठ वारं वार पढनाही एक अतिसुगम उपाय है।

अब इस पाठमें आये कुछ संधि खोलकर बताते हैं—

१ पुराऽहल्या = पुरा अहल्या।

२ गौतम ऋषिः = गौतमः ऋषिः।

३ तपोऽतप्यत् = तपः अतप्यत्।

४ इंद्रो गौतमस्याश्रममेकदाजगाम = इंद्रः गौतमस्य आश्रमं एकदा आजगाम।

५ तदेन्द्रो विषण्णवदनश्चाभवत् = तदा इन्द्रः विषण्णवदनः च अभवत्।

६ एतद्वनं = एतत् वनं।

७ चाधुना = च अधुना।

८ विश्वामित्रस्यर्षेः = विश्वामित्रस्य ऋषेः।

९ रामलक्ष्मणावपि = रामलक्ष्मणौ अपि।

१० कश्चिन्नरः = कः चित् नरः।

११ प्रहितोऽस्मि = प्रहितः अस्मि।

१२ कवेरविज्ञातं = कवेः अविज्ञातं।

इसी प्रकार अन्यान्य संधियोंके विषयमें पाठक विचार करके तथा पूर्वपाठ देखके समझनेका यत्न करें। ध्यानसे देखनेसे इसमें कोई कठिनता नहीं रहेगी।

---

## पाठ १२

अकारान्त नपुंसकलिंग शब्दोंके रूप निम्नलिखित प्रकार होते हैं—

| | |
|---|---|
| १ मित्रं–मित्र | ४ मित्राय-मित्रके लिये |
| (हे)मित्र! =(हे) मित्र | ५ मित्रात्–मित्रसे |
| २ मित्रं–मित्रको | ६ मित्रस्य = मित्रका |
| ३ मित्रेण–मित्रसे | ७ मित्रे–मित्रमें |

केवल प्रथमाका रूप पुंल्लिंगसे भिन्न है। अन्य रूप अकारान्त पुंल्लिंग शब्दोंके समान ही हैं, यह बात यहां ध्यानमें धरनेयोग्य है। इसी प्रकार निम्नलिखित अकारान्त नपुंसकलिंगी शब्दोंके रूप होते हैं—

| | |
|---|---|
| पापं—पाप | औषधं—दवा |
| दर्शनं—दर्शन | तोयं—जल |
| कार्पण्यं—कंजूसी | कुसुमं—फूल |
| कार्यं—कर्तव्य | अब्जं—कमल |
| दुःखं—कष्ट | चक्रं—चाक |
| व्रतं—व्रत, नियम | रूपं—सुंदरता, स्वरूप |
| दानं—दान | लावण्यं—सुंदरता |
| अंतःपुरं-अंदरका कमरा | नेत्रं—आंख |
| हृदयं—हृदय | सूत्रं—धागा |

## संस्कृत-वाक्यानि ।

१ पापी मनुष्यः पापात् कथं मुक्तः भवति ? २ तव दर्शनाय अहं अद्य अत्र आगतः। ३ दानसमये कार्पण्यं मा कुरु। ४ रुग्णाय औषधं देहि। ५ तृषिताय तोयं देहि। ६ उद्यानात् कुसुमं स आनयति। ७ जले अब्जं भवति। ८ मनुष्यः दुःखं न वांछति। ९ अहं व्रतं चरिष्यामि। १० सत्यं एव परमं व्रत अस्ति।११ ज्ञानस्य दानं धनस्य दानात् श्रेष्ठं। १२ गृहस्य मध्ये, अंतःपुरं भवति। १३ अंतःपुरे गृहपत्नी वसति। १४ दुष्टस्य मुखे अमृतं हृदये च विषं भवति। १५ पश्य, रथस्य चक्रं कथं भ्रमति !

## भाषा-वाक्य।

१ पापी मनुष्य पापसे कैसे मुक्त होता है ? २ तेरे दर्शन के लिये मैं आज यहां आगया। ३ दानके समय कंजूसी मत कर। ४ रोगीको औषध दो। ५ प्यासेके लिए जल दो। ६ बागसे फूल वह लाता है ७। जलमें कमल होता है। ८ मनुष्य दुःख नहीं चाहता है। ९ मैं व्रत करूंगा। १० सत्य ही श्रेष्ठ व्रत है। ११ ज्ञानका दान धनके दानसे श्रेष्ठ है। १२ घरके मध्यमें अंतःपुर होता है। १३ अंतःपुरमें घरकी स्वामिनी स्त्री रहती है। १४ दुष्टके मुखमें अमृत और हृदयमें विष होता है। १५ देख रथका चक्र कैसा घूमता है !

*

संस्कृत--वाक्यानि ।

१६ बालकस्य रमणीयं रूपं अहं पश्यामि । १७ सः पुरुषः रूपेण बलेन लावण्येन च अतीव सुंदरः अस्ति । १८ तस्य नेत्रं इदानीं रुग्णं जातम् । १९ तत् श्वेतं सूत्रं अत्र आनय ।

भाषा-वाक्य।

१६ बालकका रमणीय रूप मैं देखता हूं । १७ वह पुरुष रूप, बल और लावण्यसे अत्यंत सुंदर है । १८ उसका नेत्र अब रोगी हुआ । १९ वह सफेद धागा यहां ला ।

संस्कृत--वाक्यानि

कविः सूत्रेण यज्ञोपवीतं करोति । यथा स नेत्रेण रूपं पश्यति तथा कर्णेन शब्दं शृणोति । तस्य स्वरूपं पश्य । यंत्रस्य चक्रं इदानीं न भ्रमति । सः यंत्रस्य चक्रं कदा भ्रामयिष्यति ? हृदयं शुद्धं कुरु । तत्र पापं मा अस्तु । यथा अंतःपुरे पुत्री भ्रमति तथा गृहाद् बहिः पुत्रः भ्रमति । दानेन पुण्यं भवति वा न ? यदि दानेन पुण्यं भवति तर्हि त्वं दानं किं न करोषि ?

पाठक ये वाक्य पढें तथा स्वयं अपने मनसे उक्त शब्दोंके प्रयोग करके वाक्य बनावें। और यदि हो सके तो कई स्थानोंमें संधि भी बनानेका यत्न करें ।

# पाठ १३

## संस्कृत--वाक्यानि।

१ जनकः उवाच– हे मुनिपुंगव ! अत्र अस्ति धनुष्यं शंकरस्य। २ क्षेत्रं कृषतः मे लांगलात् उत्थिता एका सुता च अस्ति। ३ क्षेत्रं शोधयता लब्धा अतः सा सीता इति नाम्ना विश्रुता। ४ सा इदानीं स्वयंवर-योग्या संजाता। ५ वर्धमानां तां सीतां सर्वे राजानः अत्र आगत्य वरयितुं इच्छन्ति। ६ वरयितुं इच्छतां अपि तेषां कन्यां न ददामि वीर्यशुल्का इति। ७ सर्वे नृपतयः वीर्यं जिज्ञासवः अत्र उपागच्छन्।

## भाषा--वाक्य।

१ जनक बोला--कि हे मुनि [पुंगव] श्रेष्ठ ! यहां है शंकरका धनुष्य। २ खेतकी ( कृषतः ) कृषि करनेवाले मेरे हलसे उत्पन्न हुई एक पुत्री और है। ३ खेतका शोधन करनेवालेने [लब्धा] प्राप्त की इसलिए वह सीता इस नामसे [विश्रुता] प्रसिद्ध है। ४ वह अब स्वयंवरके लिये योग्य हो गई है। ५ बढनेवाली उस सीताको सब राजा लोग यहां आकर वरना चाहते हैं। ६ वरनेकी इच्छा करनेवाले उन [राजाओं] को भी कन्या मैं नहीं देता हूं। [क्योंकि] यह [वीर्य--शुल्का] वीर्यके बलसे लेनेयोग्य है। ७ सब राजालोग शौर्यकी जिज्ञासा करके यहां आगये।

संस्कृत--वाक्यानि ।

८ तेषां पुरस्तात् मया शैवं धनुः उपाहृतम् । ९ तस्य ग्रहणे तोलने अपि वा ते नृपाः न शेकुः । १० तत् एतत् परमभास्वरं धनुः रामलक्ष्मणयोः च अपि दर्शयिष्यामि । ११ रामः यदि अस्य आरोपणं कुर्यात् अहं सीतां तस्मै दद्याम् । १२ ततः जनकेन समादिष्टाः सचिवाः प्रयासेन धनुं तत्र आनयामासुः । १३ महर्षेः वचनात् तत्र धनुः दृष्ट्वा रामः अब्रवीत् । १४ इदं दिव्यं धनुः पाणिना संस्पृशामि । तस्य तोलने पूरणे अपि यत्नवान् च भविष्यामि ।

भाषा--वाक्य ।

८ उनके सन्मुख मैंने शिवजीका धनुष्य लाया । ९ उसके पकडने और तोलनेमें भी वे राजा नहीं समर्थ हुए । १० वह यह परम तेजस्वी धनुष्य रामलक्ष्मणोंको भी दिखाऊंगा। ११ राम यदि इसको (आरोपणं) दोरी चढायेगा तो मैं सीता उसको दूंगा। १२ तब जनकने आदेश दिये हुए मंत्री प्रयाससे धनुष्यको वहां लाने लगे । १३ महर्षिके वचनसे वह धनुष्य देखकर राम बोला । १४ इस दिव्य धनुपको ( पाणिना ) हाथसे स्पर्श करता हूं। उनको तोलने और पूर्ण करनेमें भी यत्नवान् होऊंगा ।

## पाठ १४ .

### संस्कृत-वाक्यानि।

१ एवं उक्त्वा रामः धनुः मध्ये जग्राह। लीलया पूरयामास च। २ यदा रामेण मौर्वी आरोपिता तदा तत् धनुः बभञ्ज च। ३ तदा राजा जनकः प्रांजलिः विश्वामित्रं उवाच। ४ अत्यद्भुतं इदं। अचिन्त्यं अतर्कितं च मया। ५ मे सुता सीता रामं भर्तारं प्राप्य कीर्तिं आहरिष्यति। ६ मे मंत्रिणः शीघ्रं अयोध्यां गच्छन्तु। राजानं दशरथं च अत्र आनयन्तु। ७ एवं समादिष्टाः दूताः त्रिरात्रेण अयोध्यां प्रविशन्। ८ वृद्धं दशरथं राजानं जनकस्य कृते कुशलं च पप्रच्छुः।

### भाषा-वाक्य।

१ ऐसा बोलकर रामने धनुष्यको बीचमें पकडा और लीलासे पूरण किया। २ जब रामने ( मौर्वी ) डोरी चढाई तब वह धनुष (बभञ्ज) टूट गया। ३ तब राजा जनक हाथ जोड विश्वामित्रसे बोला। ४ अति अद्भुत यह है। अचिंत्य और मेरेसे अतर्कित है। ५ मेरी लडकी सीता रामको पति प्राप्त कर कीर्ति कमायेगी। ६ मेरे मंत्री शीघ्र अयोध्याको जांय और राजा दशरथको यहां ले आंय। ७ इस प्रकार आदिष्ट हुए दूत तीन रात्रीके बाद अयोध्यामें प्रविष्ट हुए। ८ वृद्ध दशरथ राजाको जनकके लिये कुशल पूछने लगे।

संस्कृत-वाक्यानि ।

९ तव पुत्रेण रामेण सीता निर्जिता। १० अतः जनकः राजा विवाहमंगलाय भवन्तं सपुरोहितं निमंत्रयति।

भाषा-वाक्य ।

९ तेरे पुत्र रामने सीताको जीत लिया है। १० इस-लिए जनक राजा विवाहमंगलके लिये ( भवन्तं ) आपको पुरोहितोंके साथ निमंत्रण देता है।

पाठक इस पाठको खूब तैयार करें। और अनेक वार पढें।

संधि किए हुए वाक्य।

१ अत्रास्ति धनुष्यं शंकरस्य । शंकरस्य धनुष्य-मत्रास्ति । धनुष्यमस्त्यत्र शंकरस्य ।अस्त्यत्र धनुष्यं शंकरस्य ।

२ क्षेत्रं कृषतो मे लांगलादुत्थितैका सुता चास्ति। मे क्षेत्रं कृषतो लांगलादुत्थितैका चास्ति सुता । सुता चास्त्येका लांगलादुत्थिता मे क्षेत्रं कृषतः ।

३ क्षेत्रं शोधयता लब्धाऽतः सा सीतेति नाम्ना विश्रुता। लब्धा क्षेत्रं शोधयताऽतः सीतेति नाम्ना विश्रुता।

४ सेदानीं स्वयंवरयोग्या संजाता । संजातेदानीं सा स्वयंवरयोग्या। स्वयंवरयोग्या सा संजातेदा-नीम् ।

## पाठ १५

श्लोकोंके पाठोंमें पहिले पद देकर अन्वय दिया जाता था परंतु इस पुस्तकके पूर्वपाठसेही पद देना बंद किया है। पाठकोंको पदके विषयमें संदेह हुआ तो वे अन्वयमें पदोंको देख सकते हैं। पाठक स्वयं अन्वयको देखकर श्लोकके पद लिखनेका अभ्यास करें। इससे उनका अभ्यास बहुतही बढ जायगा।

यथा तस्य तथा नस्त्वं निर्विशेषा वयं त्वयि ।
भवतश्च यथा तस्य पालयास्मान्यथा कविः ॥९॥
( म० भारत आदि० १४९ )

अन्वयः— यथा तस्य त्वं। तथा नः त्वं। वयं त्वयि निर्विशेषाः। यथा तस्य तथा भवतः। यथा कविः तथा अस्मान् पालय ॥

अर्थ—जैसा उस विदुरके लिये तू है (तथा) वैसा (नः) हमारे लिये तू है। (वयं) हम (त्वयि) तेरे अंदर (निर्विशेषाः) विशेषतारहित हैं [अर्थात् कुछ अन्य भाव नहीं रखते] जैसा उस विदुरके विषयमें वैसे ही (भवतः) आपके विषयमें [हमारे मनमें भाव है] जिस प्रकार (कविः) विदुर उसी प्रकार तुम भी ( अस्मान् ) हमारी ( पालय ) रक्षा करो।

इदं शरणमाग्नेयं मदर्थमिति मे मतिः ।
पुरोचनेन विहितं धार्तराष्ट्रस्य शासनात् ॥ १० ॥

अन्वयः--इदं आग्नेयं शरणं धार्तराष्ट्रस्य शासनात् पुरोचनेन मदर्थं विहितं इति मे मतिः ॥

अर्थ–यह (आग्नेयं) अग्निसे जलनेयोग्य ( शरणं ) घर धृतराष्ट्र पुत्रकी ( शासनात् ) आज्ञासे पुरोचनने (विहितं) मेरे लिये निर्माण किया ऐसा मेरा मत है।

स पापः कोशवांश्चैव ससहायश्च दुर्मतिः ।
अस्मानपि च पापात्मा नित्यकालं प्रबाधते ॥११॥

अन्वयः--स दुर्मतिः पापः कोशवान् च ससहायः एव पापात्मा अस्मान् अपि नित्यकालं प्रबाधते ॥

अर्थ—वह दुष्टबुद्धि पापी (कोश--वान्) खजानेसे युक्त अर्थात् धनवान, (स--सहायः) सहायी जनोंसे युक्त पापात्मा ( अस्मान् ) हमको (अपि) ही सदा सर्वदा बाधा करता है।

स भवान्मोक्षयत्वस्मान्यत्नेनास्माद्धुताशनात् ।
अस्मास्विह हि दग्धेषु सकामः स्यात्सुयोधनः॥१२

अन्वयः--सः भवान् अस्मात् हुताशनात् यत्नेन अस्मान् मोक्षयतु । हि अस्मासु इह दग्धेषु सुयोधनः सकामः स्यात् ।

अर्थ—वह ( भवान् ) आप ( अस्मात् ) इस अग्निसे यत्नके साथ हमको ( मोक्षयतु ) छुडाइये ॥ क्योंकि यहां ( अस्मासु दग्धेषु ) हम जल जानेपर (सुयोधनः) दुर्योधन ( स--कामः ) सफल इच्छावाला हो जायगा ।

इदं तदशुभं नूनं तस्य कर्म चिकीर्षितम् ।
प्रागेव विदुरो वेद तेनास्मानन्वबोधयत् ॥ १४ ॥

अन्वयः-तस्य इदं चिकीर्षितं कर्म नूनं अशुभं। विदुरः प्राक् एव वेद। तेन अस्मान् अन्वबोधयत्॥

अर्थ-उसका यह ( चिकीर्षितं ) संकल्पित कर्म ( नूनं ) निःसंदेह अशुभ है। विदुर ( प्राक् ) पहिले से ही ( वेद ) जानता है। ( तेन ) इस कारण (अस्मान्) हमको (अन्वबोधयत्) सावधान किया।

सेयमापदनुप्राप्ता क्षत्ता यां दृष्टवान्पुरा।
पुरोचनस्याविदितानस्माँस्त्वं प्रतिमोचय॥ १५॥

अन्वयः-सा इयं आपत् अनुप्राप्ता। यां क्षत्ता पुरा दृष्टवान्। त्वं पुरोचनस्य अविदितान् प्रतिमोचय॥

अर्थ-वह (इयं) यह आपत्ति प्राप्त हुई है। (यां) जिसे ( क्षत्ता ) विदुरने पहिले ( दृष्टवान् ) देखा था। तू पुरोचन को ( अ-विदितान् ) विदित न होते हुए (अस्मान्) हमको ( प्रतिमोचय ) छुडा।

स तथेति प्रतिश्रुत्य खनको यत्नमास्थितः।
परिखामुत्किरन्नाम चकार च महद्बिलम्॥ १६॥

अन्वयः-स खनकः तथा इति प्रतिश्रुत्य यत्नं आस्थितः। परिखां उत्किरन् नाम महत् बिलं चकार च॥

अर्थ-वह खोदनेवाला ( तथा ) ठीक ऐसा ( प्रतिश्रुत्य ) कहकर यत्न करने लगा। (परिखां) खंदक (उत्किरन् नाम) खोदनेके मिषसे बडा बिल करता रहा।

इन श्लोकोंमें आये संधियोंके पद अब देखिये—
१ नस्त्वं = नः त्वं ।
२ भवतश्च = भवतः च ।
३ मदर्थमिति = मत् अर्थं इति
४ पालयास्मान् = पालय अस्मान्
५ कोशांश्चैव = कोशान् च एव ।
६ मोक्षयत्वस्मान् = मोक्षयतु अस्मान् ।
७यत्नेनास्माद्धुताशनात्-यत्नेन अस्मात् हुताशनात्।
८ अस्मास्विह = अस्मासु इह ।
९ प्रागेव = प्राक् एव
१० विदुरो वेद = विदुरः वेद ।
११ सेयमापदनुप्राप्ता = सा इयं आपद् अनुप्राप्ता ।
१२ अस्माँस्त्वं = अस्मान् त्वं ।
• ये संधि देखकर संधिके साथ पाठक परिचित हों।

संधि किए हुए वाक्य ।

यथा तस्य त्वं तथैवास्माकं त्वमसि । यथा कविरस्मान्पालयति, तथैव त्वमपि पालयास्मान् । इदं लाक्षागृहं धार्तराष्ट्रस्याज्ञया पुरोचनेन निर्मितमिति मम मतिः । स दुर्मतिः पापो दुर्योधनो धनवान् सहायवांश्चास्मान्नित्यं प्रबाधते । अतो भगवान् यत्नेनास्माद्धुताशनादस्मान्मोक्षयतु ।

## पाठ १६

यदि आपके पूर्व पाठ ठीक हो चुके हैं तो इस पाठमें दिया हुआ सरल संस्कृत आपके ध्यानमें आ जायगा। देखिये-

जनक उवाच—हे मुनिपुंगव ! अत्रास्ति धनुष्यं शंकरस्य। क्षेत्रं कृषतो मे लाङ्गलादुत्थितैका सुता चास्ति। क्षेत्रं शोधयता लब्धा अतः सा सीतेति नाम्ना विश्रुता। सेदानीं स्वयंवरयोग्या संजाता। वर्धमानां तां सीतां सर्वे राजानोऽत्रागत्य वरयितुमिच्छन्ति।

वरयितुमिच्छतामपि तेषां कन्यां न ददामि वीर्यशुल्केति। सर्वे नृपतयो वीर्यं जिज्ञासवोऽत्रोपागच्छन्। तेषां पुरस्तान्मया शैवं धनुरुपाहृतम्। तस्य ग्रहणे तोलनेऽपि वा ते नृपा न शेकुः। तदेतत्परम भास्वरं धनू रामलक्ष्मणयोश्चापि दर्शयिष्यामि।

रामो यद्यस्यारोपणं कुर्यादहं सीतां तस्मै दद्याम्। ततो जनकेन समादिष्टाः सचिवाः प्रयासेन धनुस्तत्रानयामासुः।

महर्षिवचनात्तद्धनुर्दृष्ट्वा रामोऽब्रवीत्। इदं दिव्यं धनुः पाणिना संस्पृशामि तस्य तोलने पूरणेऽपि यत्नवांश्च भविष्यामि।

एवमुक्त्वा रामो धनुर्मध्ये जग्राह। लीलया पूरयामास च। यदा रामेण मौर्वी आरोपिता तदा तद्धनुर्भग्नं च।

तदा राजा जनकः प्रांजलिर्विश्वामित्रमुवाच । अत्यद्भुतमिदम् । अचिंत्यमतर्कितश्च मया । मे सुता सीता रामं भर्तारं प्राप्य कीर्तिमाहरिष्यति । मे मंत्रिणः शीघ्रमयोध्यां गच्छन्तु । राजानं दशरथं चात्रानयन्तु ।

एवं समादिष्टा दूतास्त्रिरात्रेणायोध्यां प्राविशन् । वृद्धं दशरथं राजानं जनकस्य कृते कुशलं च पप्रच्छुः ।

तव पुत्रेण रामेण सीता निर्जिता । अतो जनको राजा विवाहमङ्गलाय भवन्तं सपुरोहितं निमन्त्रयति ।

पाठक इसको वार वार पढें । अनेक वार पढनेसेही यह सरल संस्कृत पाठकोंके समझमें आ जायगा ।

यदि किसी स्थानपर अर्थके विषयमें अथवा संधिके विषयमें संदेह हुआ तो पाठक पूर्वके तेरहवें पाठमें देखें । वहांके वाक्य देखनेसे सब संदेह निवृत्त हो जायगे । वहां हरएक वाक्य पदच्छेदपूर्वक दिया हुआ है । और पूर्ण शब्दार्थ भी दिया है । तथापि उसको न देखते हुएही पाठक इस पाठको समझनेका यत्न करें । अब और देखिये—

यथा तस्य त्वं, तथा नस्त्वम् । वयं त्वयि निर्विशेषाः । यथा तस्य तथा भवतः । यथा कविः तथा त्वमस्मान्पालय ।

इदमाग्नेयं शरणं धार्तराष्ट्रस्य शासनात्पुरोचनेन विहितमिति मे मतिः ।

स दुर्मतिः पापः कोशवांश्च ससहायश्चैव पापात्माऽस्मानपि नित्यकालं प्रबाधते ।

स भवानस्माद्धुताशनाद्यत्नेनास्मान्मोक्षयतु । यस्मात्त्विह दग्धेषु सुयोधनः सकामः स्यात् । तस्येदं चिकीर्षितं कर्म नूनमशुभम् । विदुरः प्रागेव वेद । तेनास्मानन्वबोधयत् ।

सेयमापदनुप्राप्ता । यां क्षत्ता पुरा दृष्टवान् । त्वं पुरोचनस्याविदितानस्मान्प्रतिमोचय ।

स खनकस्तथेति प्रतिश्रुत्य यत्नमास्थितः । परिखामुत्किरन्नाम महद्बिलं चकार च ।

पाठक इसको भी वारंवार पढें । पढनेसे संधि खोलनेकी विधि ज्ञात हो सकती है। यदि किसी स्थानपर संदेह हुआ तो १५ वाँ पाठ देखें वहां इसके मूल श्लोक, अन्वय, अर्थ आदि सब विद्यमान हैं । यदि पूर्व पाठ ठीक हो चुका है तो इसमें कोई कठिनता ही नहीं रहेगी । परंतु किसी कारण संदेह हुआ तो पूर्व पाठ देखनेसे निवृत्त हो सकता है ।

निम्नलिखित प्रश्नोंके उत्तर संस्कृतमें ही दीजिये–

१ कस्य धनुर्भंगं नत् आसीत् ?

२ सीता कथं प्राप्ता ? केन प्राप्ता ?

३ स्वयंवरसमये सर्वे राजानः किं कुर्वन्ति ?

४ नृपाः तस्य धनुष्यस्य तोलने ग्रहणे वा समर्थाः सन्ति वा न ?

५ ततः रामेण किं कृतम् ?

६ यदा धनुः बभञ्ज तदा जनकेन किं कृतम् ?

७ जनकस्य मन्त्रिणः दशरथं किं ऊचुः ?

८ आग्नेयं शरणं केन विहितम् ?

९ कस्य शासनात् तेन विहितम् ?

१० कः पापात्मा दुर्मतिः ?

११ तेन पापेन किं कृतम् ?

१२ विदुरेण किं कृतम् ?

इन प्रश्नोंका उत्तर संस्कृतमें ही देनेका यत्न कीजिये। यदि उत्तर स्वयं न सूझा तो इसी पाठके पूर्व वाक्य देखकर उत्तर दीजिये। ऐसा करनेसे ही आपकी उन्नति निःसंदेह हो सकती है।

प्रश्नोंके उत्तर ठीक आनेतक आप इस पाठका अभ्यास करते रहिये।

संधि किये हुए वाक्य।

तत्कस्य धनुष्यमासीत्। नृपास्तस्य धनुष्यस्य तोलने ग्रहणे वा समर्थाः सन्ति वा न ? ततो रामेण किं कृतम् ? यदा धनुर्बभञ्ज तदा जनकेन किं कृतम् ? जनकस्य मन्त्रिणो दशरथं किमूचुः ? आग्नेयं शरणं केन विहितम् ? कस्य शासनात्तेन विहितम् ? को दुर्मतिः पापात्मा ?

# पाठ १७

## संस्कृत-वाक्यानि।

१ ततः दशरथः मिथिलां उपेयिवान् । जनकः च पूजां कल्पयित्वा एनं उवाच । २ दिष्ट्या प्राप्तः असि सह वसिष्ठेन । ददामि सीतां रामाय ऊर्मिलां लक्ष्मणाय च । ३ विश्वामित्रः च उवाच । राजन् ! सदृशः धर्मसंबंधः रामस्य सीतया सह, लक्ष्मणस्य च ऊर्मिलया सह । ४ अन्यत् च । यवीयसः जनकभ्रातुः कुशध्वजस्य अपि सुताद्वयं अस्ति । ५ भरतशत्रुघ्नयोः पत्न्यर्थं सुताद्वयं अपि योग्यम् । ६ वसिष्ठेन अपि तत् अनुमतम् ।

## भाषा-वाक्य।

१ पश्चात् दशरथ मिथिलाके प्रति चला। जनकने पूजा कर उनसे भाषण किया । २ सुदैवसे तू यहां प्राप्त हुआ है वसिष्ठके साथ। देता हूं सीताको रामके लिये और ऊर्मिलाको लक्ष्मणके लिये । ३ विश्वामित्र बोले, हे राजन् ! योग्यही धर्मसंबंध है। रामका सीताके साथ लक्ष्मणका उर्मिलाके साथ ।४ और यह है कि जनकके ( यवीयसः ) छोटे भाई कुशध्वजकी भी दो लडकियां हैं। ५ भरत और शत्रुघ्नकी पत्निके लिए वे दोनों लडकियां योग्य हैं । ६ वसिष्ठने भी उसकी अनुमति दी ।

संस्कृत-वाक्यानि ।

७ जनकः तु प्राञ्जलिः उवाच । धन्यं मन्ये मम कुलम् । ८ यतः उभौ अपि मुनिपुंगवौ युवां अस्माकं कुलसंबंधं सदृशं ज्ञापयतः । ९ एकेन एव अह्ना चत्वारो राजपुत्राः चतसृणां राजपुत्रीणां पाणीन् गृह्णन्तु । १० ततः सर्वाभरणभूषितां सीतां समानीय, अग्नेः पुरस्तात् संस्थाप्य, राजा रामं अब्रवीत् । ११ मे सुता इयं सीता अद्य तव सहधर्मचारिणी, प्रतीच्छ एनां पतिव्रतां, छायां इव अनुगामिनीम् । १२ ततः सर्वे महर्षयः साधु साधु इति ऊचुः ।

भाषा-वाक्य ।

७ जनक तो हाथ जोडकर बोला, कि धन्य मानता हूं मेरा कुल । ८ क्योंकि ( युवां ) आप दोनों भी मुनिश्रेष्ठ हमारे कुलसंबंधको योग्य (ज्ञापयतः)कह रहे हैं । ९ एकही दिन चारों राजपुत्र चारों राजपुत्रियोंका (पाणीन्) हाथोंको (गृह्णन्तु) लेवें । पाणिग्रहण करें । १० पश्चात् सर्व भूषणोंसे भूषित सीता को ला, अग्निके सामने (संस्थाप्य) रखकर राजा रामसे बोला । ११ मेरी पुत्री यह सीता आजसे तेरी सहधर्मचारिणी (तेरे साथ धर्माचरण करनेवाली) इच्छा कर इस पतिव्रताकी, यह छायाके समान ( अनुगामिनी ) पीछेसे आनेवाली है । १२ तब सब महर्षि ' उत्तम है ' ऐसा कहने लगे ।

## पाठ १८

### संस्कृत-वाक्यानि ।

१ लक्ष्मणं भरतं शत्रुघ्नं च तथैव क्रमेण ऊर्मिलया मांडव्या श्रुतकीर्त्या च सह संयोजयामासुः । २ ते अग्निं त्रिः परिक्रम्य भार्याः ऊहुः । ३ अथ रात्र्यां व्यतीतायां विश्वामित्रः, आपृष्ट्वा रामचंद्रं, उत्तरपर्वतं जगाम । ४ राजा दशरथः अपि मिथिलाधिपतिं जनकं पृष्ट्वा अयोध्यानगरीं आशु प्रस्थितः । ५ मार्गे तु क्षत्रियविमर्दनं जामदग्न्यं रामं दशरथः ददर्श । ६ तदा दशरथः प्राञ्जलिः भूत्वा ' अभयं देहि ' इति तं प्रार्थयामास ।

### भाषा-वाक्य ।

१ लक्ष्मण भरत शत्रुघ्नको उसी क्रमसे ऊर्मिला, मांडवी और श्रुतकीर्तिके साथ संयुक्त किया । २ उन्होंने तीनवार अग्निकी परिक्रमा कर भार्याओंके साथ ( ऊहुः ) विवाह किया । ३ तब रात्री व्यतीत होनेपर विश्वामित्र पूछकर रामचंद्रको, उत्तर पर्वतको चला । ४ राजा दशरथ भी मिथिलाके अधीश जनकसे पूछ कर अयोध्या नगरीको (आशु) शीघ्रही चला । ५ मार्गमें तो क्षत्रियघातक जमदग्निपुत्र रामको दशरथने देखा । ६ तब दशरथने हाथ जोडकर ' अभय दो ' ऐसी उसकी प्रार्थना की ।

### संस्कृत-वाक्यानि ।

७ अनादृत्य तद् वाक्यं, रामं एव जामदग्न्यः उवाच । पश्य अद्य एव मे पराक्रमम् । ८ रामः अपि धनुः सज्जीकृत्य उवाच । ब्राह्मणः असि त्वम् । तस्मात् ते प्राणं न हरामि । ९ ततः जामदग्न्यः महेन्द्रपर्वतं तपश्चरणं कर्तुं गतः, रामः अपि अयोध्यां प्राप्तः ।

### भाषा-वाक्य ।

७ अनादर कर उस वाक्यका, रामकोही जमदग्निपुत्र बोला । देख अब ही मेरा पराक्रम । ८ राम भी धनुष्य सज्य कर बोला, कि ब्राह्मण है तू इसलिये तेरा प्राण नहीं हरण करता । ९ पश्चात् जमदग्निपुत्र महेंद्रपर्वतपर तप करनेके लिए गया और राम भी अयोध्याको प्राप्त हुआ ।

### संधि किये हुए वाक्य ।

अनादृत्य तद्वाक्यं राममेव जामदग्न्य उवाच । पश्याद्यैव मे पराक्रमम् । रामोऽपि धनुः सज्जीकृत्योवाच । ब्राह्मणोऽसि त्वम् । तस्मात्ते प्राणं न हरामि । ततो जामदग्न्यो महेन्द्रपर्वतं तपश्चरणं कर्तुं गतः, रामोऽप्ययोध्यां प्राप्तः ।

---

## पाठ १९

चक्रे च वेश्मनस्तस्य मध्ये नातिमहाद्बिलम् ।
कपाटयुक्तमज्ञातं समं भूम्याश्च भारत ॥ १७ ॥
( म. भारत आदि. अ. १४९ )

अन्वयः—हे भारत ! तस्य वेश्मनः मध्ये न अतिमहत् कपाटयुक्तं अज्ञातं भूम्याः च समं बिलं चक्रे ॥

अर्थ—हे भारत ! उस ( वेश्मनः ) घरके मध्यमें ( न अतिमहत् ) अत्यंत बडा नहीं और (कपाट-युक्तं) किवाडोंसे युक्त तथा ( अज्ञातं ) गुप्त (भूम्याः समं) भूमिके समानही ( बिलं ) बिल ( चक्रे ) बना दिया ।

पुरोचनभयादेव व्यदधात्संवृतं मुखम् ।
स तस्य तु गृहद्वारि वसत्यशुभधीः सदा ॥१८॥

अन्वयः-पुरोचन+भयात् एव संवृतं मुखं व्यदधात् । सः अशुभधीः तस्य गृहद्वारि तु सदा वसति ।

अर्थ—पुरोचनके भयसेही उस बिलका मुख ( संवृतं ) ढंका हुआ बंद (व्यदधात्) किया । वह ( अशुभ-धीः ) दुष्ट-बुद्धिवाला उस घरके द्वारमें ही सदा (वसति) रहता था ।

तत्र ते सायुधाः सर्वे वसन्ति स्म क्षपां नृप ।
दिवा चरन्ति मृगयां पांडवेया वनाद्वनम् ॥ १९ ॥

अन्वयः—हे नृप ! ते सर्वे पांडवेयाः सायुधाः क्षपां तत्र वसन्ति स्म, दिवा वनात् वनं मृगयां चरन्ति ॥

अर्थ—हे राजा ! वे सब पांडुके पुत्र ( स-आयुधाः ) हथियारोंके समेत (क्षपां) रात्रिके समय वहां (वसन्ति स्म) रहते थे। (दिवा) दिनके समय एक वनसे दूसरे वनको मृगयाके लिये ( चरन्ति ) घूमते थे ।

विश्वस्तवदविश्वस्ता वञ्चयन्तः पुरोचनम् ।
अतुष्टास्तुष्टवद्राजन्नूषुः परमविस्मिताः ॥ २० ॥

अन्वयः-हे राजन् पुरोचनं वञ्चयन्तः, अविश्वस्ताः विश्वस्तवत्, अतुष्टाः तुष्टवत्, परम-विस्मिताः ऊषुः ॥

अर्थ—हे राजा ! पुरोचनको ( वञ्चयन्तः ) ठगाते हुए ( अ-विश्वस्ताः ) विश्वास न करते हुए भी विश्वास करनेके समान, ( अ-तुष्टाः ) संतुष्ट न होते हुए भी संतुष्ट होनेके समान, अत्यंत ( विस्मिताः ) विस्मित होकर ( ऊषुः ) वसने लगे ।

न चैनानन्वबोधन्त नरा नगरवासिनः ।
अन्यत्र विदुरामात्यात्तस्मात्खनकसत्तमात् ॥२१॥

अन्वयः-तस्मात्, खनकसत्तमात् विदुरामात्यात् अन्यत्र नगरवासिनः नराः एनान् न अन्वबोधन्त ॥

अर्थ-उस खोदनेवालोंमें (सत् तम) श्रेष्ठ विदुरके (अमात्य) मंत्रीको छोडकर ( अन्यत्र ) दूसरे नगरवासी ( नराः ) जन ( एनान् ) इनको नहीं ( अन्वबोधन्त ) जानते थे ।

## पाठ २०

तांस्तु दृष्ट्वा सुमनसः परिसंवत्सरोषितान् ।
विश्वस्तानिव संलक्ष्य हर्षं चक्रे पुरोचनः ॥ १ ॥
( म. भारत आदि. अ. १५० )

अन्वयः--परि-संवत्सर--उषितान् सुमनसः तान् दृष्ट्वा, विश्वस्तान् इव संलक्ष्य पुरोचनः हर्षं चक्रे ॥

अर्थ—( संवत्सर ) वर्षपर्यंत ( उषित ) रहे हुए उत्तम मनवाले उन पाण्डवोंको (दृष्ट्वा) देखकर, उनको विश्वास किये समान (संलक्ष्य) अनुभव कर पुरोचन आनंद मानने लगा।

पुरोचने तथा हृष्टे कौन्तेयोऽथ युधिष्ठिरः ।
भीमसेनार्जुनौ चोभौ यमौ प्रोवाच धर्मवित् ॥२॥

अन्वयः-तथा पुरोचने हृष्टे अथ कौंतेयः धर्मवित् युधिष्ठिरः भीमसेनार्जुनौ उभौ यमौ च प्रोवाच ॥

अर्थ---उस प्रकार पुरोचन संतुष्ट होनेपर ( अथ ) नंतर ( कौन्तेयः ) कुन्तीपुत्र धर्मज्ञानी युधिष्ठिर भीम अर्जुन और ( उभौ ) दोनों ( यमौ ) जुडे भाई नकुल सहदेवको ( प्रोवाच=प्र उवाच ) बोला।

इस पाठके श्लोकोंमें आये संधिका विग्रह—

१ वेश्मनस्तस्य = वेश्मनः तस्य ।
२ नातिमहद्बिलम् = न अति महत् बिलम् ।
३ भूम्याश्च = भूम्याः च ।
४ भयादेव = भयात् एव ।

५ वसत्यशुभधीः = वसति-अशुभ-धीः ।
६ सायुधाः = स-आयुधाः ।
७ वनाद्वनं = वनात्-वनम् ।
८ विश्वस्तवदविश्वस्ताः = विश्वस्तवत् आविश्वस्ता ।
९ अतुष्टास्तुष्टवद्राजन्नूषुः= अतुष्टाःतुष्टवत् राजन् ऊषुः
१० चैनानन्वबोधन्त = च एनान् अनु-अबोधन्त ।
११ तांस्तु = तान् तु ।
१२ कौन्तेयोऽथ = कौन्तेयः अथ ।
१३ भीमसेनार्जुनौ = भीमसेन-अर्जुनौ ।
१४ चोभौ = च उभौ ।
१५ प्रोवाच = प्र-उवाच ।

पाठक ये संधि देखें और संधि पहचाननेका यत्न करें ।

## समासाः ।

पूर्व श्लोकोंमें आये समासोंका विवरण-

१ भीमसेनार्जुनौ = भीमसेनः च अर्जुनः च भीमसेनार्जुनौ ( भीम और अर्जुन । )
२ धर्मवित् = धर्मं वेत्ति धर्मवित् (धर्म जाननेवाला)
३ नगरवासिनः-नगरे वसन्ति इति नगरवासिनः। ( नगरमें बसनेवाले )
४ ग्मनकसत्तमः = ग्मनकेषु सत्तमः (रोदनेवालोंमें उत्तम ।)

## पाठ २१

### संस्कृत—वाचन—पाठः ।

ततो दशरथो मिथिलामुदेयिवान् । जनकश्च पूजां कल्पयित्वैनमुवाच । दिष्ट्या प्राप्तोऽसि सह वसिष्ठेन । ददामि सीतां रामायोर्मिलां लक्ष्मणाय च ।

विश्वामित्रश्चोवाच । राजन् ! सदृशो धर्मसम्बन्धो रामस्य सीतया सह, लक्ष्मणस्य चोर्मिलया सह । अन्यच्च यवीयसो जनकभ्रातुः कुशध्वजस्यापि सुताद्वयमस्ति । भरतशत्रुघ्नयोः पत्न्यर्थं सुताद्वयमपि योग्यम् । वसिष्ठेनापि तदनुमतम् ।

जनकस्तु प्राञ्जलिरुवाच-"धन्यं मन्ये मम कुलम् । यत उभावपि मुनिपुंगवौ युवामस्माकं कुलसंबन्धं सदृशं ज्ञापयतः ।

एकेनैवाह्ना चत्वारो राजपुत्राश्चतसृणां राजपुत्रीणां पाणीन् गृह्णन्तु" ततः सर्वाभरण भूषितां सीतां समानीयाग्नेः पुरस्तात्संस्थाप्य राजा राममब्रवीत् "मे सुतेयं सीताद्य तव सहधर्मचारिणी, प्रतीच्छैनां पतिव्रतां, छायामिवानुगामिनीम् ।" ततःस र्वे महर्षयः साधुसाध्वित्यूचुः ।

लक्ष्मण भरतं शत्रुघ्नं च तथैव क्रमेणोर्मिलया माण्डव्या श्रुतकीर्त्या च सह संयोजयामासुः। तेऽग्निं त्रिः-

परिक्रम्य भार्या ऊहुः।

अथ रात्र्यां व्यतीतायां विश्वामित्र आपृष्ट्वा रामचन्द्रमुत्तरपर्वतं जगाम।

राजा दशरथोऽपि मिथिलाधिपतिं जनकं पृष्ट्वाऽयोध्यानगरीमाशु प्रस्थितः। मार्गे तु क्षत्रियविमर्दनं जामदग्न्यं रामं दशरथो ददर्श। तदा दशरथः प्राञ्जलिर्भूत्वा "अभयं देहीति" तं प्रार्थयामास।

अनादृत्य तद्वाक्यं, राममेव जामदग्न्य उवाच 'पश्याद्य मे पराक्रमम्।' रामोऽपि धनुः सज्जीकृत्योवाच "ब्राह्मणोऽसि त्वं; तस्मात्ते प्राणं न हरामि।" ततो जामदग्न्यो महेन्द्रपर्वतं तपश्चरणं कर्तुं गतो, रामोऽप्ययोध्यां प्राप्तः।

हे भारत! स तस्य वेश्मनो मध्ये नातिमहत्कपाटयुक्तमज्ञातं भूम्याश्च समं बिलं चक्रे। पुरोचनभयादेव संवृतं मुखं व्यदधात्। स पुरोचनोऽशुभधीस्तस्य गृहद्वारि तु सदा तिष्ठति।

हे नृप! ते सर्वे पाण्डवेयाः सायुधाः क्षपां तत्र वसन्ति स्म, दिवा च वनाद्वनं मृगयां चरन्ति। हे राजन्! पुरोचनं वञ्चयन्तोऽविश्वस्ता विश्वस्तवत्, अतुष्टास्तुष्टवत, परमविस्मिता ऊषुः। तस्मात्खनकसत्तमाद्विदुरामात्यादन्यत्र नगरवासिनो नरा एनान्नावबोधन्त।

## पाठ २२

परिसंवत्सरोपितान्सुमनसस्नान्दृष्ट्वा, विश्वस्तानि च संलक्ष्य, पुरोचनो हर्षं चक्रे। तथा पुरोचने हृष्टे, अथ धर्मविद्युधिष्ठिरो भीमार्जुनौ यमौ च प्रोवाच।

श्रेष्ठ उत्तमो मनुष्यो यद्यदाचरति तत्तदेवेतरो जन आचरति। यद्यदेव नृप आचरति तत्तदेव प्रजाजन आचरति। यथा विद्वानाचरति तथैव साधारणो जन आचरति। यथा त्वमाचरसि तथैवाहमाचरामि। यथाऽहमाचरामि तथा त्वं नाचरसि।

स श्रेष्ठ उत्तमः पुरुषो यद्यत्प्रमाणं कुरुते तत्तदेव लोक अनुवर्तते। यद्यद्भूपतिः प्रमाणं कुरुते तत्तदेव प्रजाजनः अनुवर्तते। यद्यद्भूपतिः प्रमाणं कुरुते साधारणो जनस्तत्तदेवानुवर्तते।

आत्मनाऽऽत्मानमुद्धरेत्। सदात्मानमेवात्मनोद्धरेत्। कदाऽप्यात्मनाऽऽत्मानं नावसादयेत्। मनुष्येण सदा तथा प्रयत्नः कर्तव्यो येन तस्योद्धारो भविष्यति।

आत्मैवात्मनो बंधुर्भवति, तथाऽऽत्मनः शत्रुरप्यात्मैव भवति। यः स्वकर्तव्यं करोति स एवात्मनो बन्धुर्भवति, तथा यः स्वकर्तव्यं न करोति, स एवात्मनः शत्रुर्भवति।

हे मनुष्य! मनो दुर्निग्रहं चलं चास्तीत्यसंशयं सत्यमेवास्ति। परंतु तस्य निग्रहोऽभ्यासेन वैराग्येण

च भवति नान्येन केनापि कर्मणा भवति ।

यो वीर इदानीं युद्धेऽवस्थितः स विजयं प्राप्स्यति। यो वीरः पुरुषो युद्धं करोति सोऽवश्यं विजयं प्राप्नोति।

तस्मात्त्वमुत्तिष्ठ । हे वीर ! इदानीं त्वं युद्धायोत्तिष्ठ, यशश्च लभस्व । शत्रूञ्जित्वा समृद्धं राज्यं भुंक्ष्व।

एते वीरा मयैव पूर्वं निहताः । अतस्त्वं निमित्तमात्रं भव। क्षत्रस्य धर्मस्य तत्त्वं 'धर्म्यं युद्धं कर्तव्य'मित्येवास्ति। अतो धर्म्याद्युद्धात्पलायनं क्षत्रियाय न योग्यं भवति ।

तस्य क्षत्रियस्य किं नगरमस्ति ? स वीरः क्षत्रियो वीरपुरे निवसति । तस्मान्नगरात्स इदानीमेवात्रागतः। स किमर्थमत्रागतः ? स कदाऽस्मान्नगरात्स्वनगरं गमिष्यतीति त्वं जानासि किम् ?

आदौ वीरेणेन्द्रियाणि संयम्य शत्रुणा सहावश्यं युद्धं कर्तव्यम्। यो वीरो निर्मलो निश्चलो निर्विकारो नित्यपूतो निस्पृहो निर्मोहः स एव प्रशंसनीयः। स एव युद्धे विजयं प्राप्नोति ।

पापी मनुष्यः पापात्कथं मुक्तो भवति ? तव दर्शनायाहमत्रागतः । दानसमये कार्पण्यं मा कुरु। रुग्णायौषधं देहि। तृषिताय तोयं देहि ।

# पाठ २३

## संस्कृत-वाचन-पाठः।

( १ )

उद्यानात्कुसुमं स आनयति। जलेऽब्जं भवति। मनुष्यो दुःखं न वाञ्छति। अहं व्रतं चरिष्यामि। सत्यमेव परमं व्रतमस्ति। ज्ञानस्य दानं धनस्य दानाच्छ्रेष्ठम्। गृहस्य मध्येऽन्तःपुरं भवति। अन्तःपुरे गृहपत्नी वसति। दुष्टस्य मुखेऽमृतं हृदये च विषं भवति। पश्य रथस्य चक्रं कथं भ्रमति?

बालकस्य रमणीयं रूपमहं पश्यामि। स पुरुषो रूपेण बलेन लावण्येन चातीव सुन्दरोऽस्ति। तस्य नेत्रमिदानीं रुग्णं जातम्। तच्छ्वेतं सूत्रमत्रानय।

कविः सूत्रेण यज्ञोपवीतं करोति। यथा स नेत्रेण रूपं पश्यति, तथा कर्णेन शब्दं शृणोति। तस्य रूपं पश्य। यन्त्रस्य चक्रमिदानीं न भ्रमति। स यन्त्रस्य चक्रं कदा भ्रामयिष्यति? हृदयं शुद्धं कुरु। तत्र पात्रं माऽस्तु। यथाऽन्तःपुरे पुत्री भ्रमति, तथा गृहाद्बहिः पुत्रो भ्रमति। दानेन पुण्यं भवति वा न? यदि दानेन पुण्यं भवति, तर्हि त्वं दानं किं न करोषि।

( २ )

युद्धं स्वर्गस्यैव द्वारमस्ति। यः क्षत्रियो धर्म्यं युद्धं करोति स तेनैव द्वारेण स्वर्गं गच्छति। यदि स युद्धे

मृतो भवति तर्हि स स्वर्गं गच्छति, यदि न मृतो विजयं प्राप्तस्तर्हि राज्यं प्राप्नोति।

अतः क्षत्रिय ईदृशं युद्धं सुखेन करोति। तेन स्वर्गं भूमिराज्यं वा प्राप्नोति। परंतु यो भीरुः पुरुषो युद्धं कर्तुं न समर्थः स न स्वर्गं प्राप्नोति। नाप्यत्र भूमिराज्यं प्राप्नोति।

यः क्षत्रियो धर्मेण राज्यं रक्षति, राज्यस्य रक्षणार्थं चावश्यकं युद्धं करोति, स एव क्षत्रियो यशस्वी कीर्तियुक्तश्च भवति, नान्यः।

उदधेर्जलं स्नानाय योग्यं भवति। उदधेर्जलस्य स्नानेन शरीरस्यारोग्यं भवति। तेन स्नानेन शरीरस्य रोगोऽपि दूरं गच्छति।

एको रथो भूमिमार्गेण गच्छति, स रथ इत्युच्यते। अन्यो रथो जलमार्गेण गच्छति, स जलरथ इत्युच्यते। तृतीयो रथ आकाशमार्गेण गच्छति, स विमान इत्युच्यते।

भूपतिः प्रजापालनेन यश इच्छति। ब्राह्मणो ज्ञानवर्धनेन श्रेयो वाञ्छति। वैश्यो धनवर्धनेनैश्वर्यं कांक्षति। शूद्रः कर्मणोत्कर्षं प्राप्नोति। सर्वोऽपि जनः स्वकर्मणैव यशस्वी भवति। न तूद्योगं त्यक्त्वा सिद्धिं कोऽपि प्राप्नोति।

## पाठ २४

ईश्वरो हृदयदेशे तिष्ठति। तं यदि त्वं शरणं गच्छसि, तर्हि स एव त्वां स्वर्गं नेष्यति।

यदि दिनसमये भानोः प्रकाशो भवति, तर्हि रात्रिसमये सोमस्य प्रकाशो भवति। सूर्यस्योष्णः प्रकाशस्तथा सोमस्य शीतः प्रकाशोऽस्ति।

यः स्वधर्मं पालयति स एवोत्कर्षं प्राप्नोति, नान्यः। तस्यैव सर्वत्र कीर्तिर्भवति नान्यस्य। स एवोत्तमं यशः प्राप्नोति, नान्यः।

अहं लोकस्य क्षयकृत्कालोऽस्मि। लोकान्समाहर्तुमिहास्मिन्युद्धे प्रवृत्तोऽस्मि। अस्मिन्युद्धे सर्वस्य लोकस्य क्षयं कर्तुमिच्छामि। ये वीरा अस्मिन्युद्धेऽत्रावस्थितास्ते सर्वेऽपि त्वामृतेऽपि न भविष्यन्त्येव।

यो वीर इदानीं युद्धेऽवस्थितः स विजयं प्राप्स्यति। यो धीरःपुरुषो युद्धं करोति सोऽवश्यं विजयं प्राप्नोति।

तस्मात्त्वमुत्तिष्ठ। यशो लभस्व। हे वीर! इदानीं त्वं युद्धायोत्तिष्ठ, यशश्च लभस्व। शत्रूञ्जित्वा समृद्धं राज्यं भुंक्ष्व।

एते वीरा मयैव पूर्वं निहताः, अतस्त्वं निमित्तमात्रं भव।

सा ताटिका राक्षसी रजोमेघेन रामं मुहूर्तं व्यमोहयत्। परन्तु पश्चाद्रामस्तां राक्षसीं ताटिकां विव्याधोरसि शरेण। तेन बाणेनोरसि विद्धा सा राक्षसी पपात ममार च।

ततस्ताटिकावधेन संतुष्टो मुनिवरो विश्वामित्रो राममुवाच। हे रामचन्द्र! सर्वथाऽहं संतुष्टोऽस्मि तेऽनेन शौर्येण। अतः प्रीत्याऽहं ते सर्वाण्यस्त्राणि प्रयच्छामि। तैरस्त्रैः समन्वितो युद्धे त्वं शत्रूञ्जेष्यसि। इत्युक्त्वा विश्वामित्रः सर्वाण्यस्त्राणि यथाशास्त्रं रामाय न्यवेदयत्। ततः स विश्वामित्रो रामं लक्ष्मणं च गृहित्वा स्वकीयं सिद्धाश्रमं प्राविशत्।

तत्र मुहूर्तं विश्रान्तौ रामलक्ष्मणौ 'मुनिश्रेष्ठो यज्ञदीक्षां प्रविशतु' इति तमनुबबन्धतुः। तच्छ्रुत्वा सर्वेऽपि मुनयो रामलक्ष्मणं प्रशशंसुः।

"अद्य प्रभृति षड्रात्रं रक्षतां युवां" इति चोचुः। तावपि यत्तौ षडहोरात्रं तपोवनमरक्षताम्।

षष्ठ्यां रात्रौ मायां कुर्वाणौ राक्षसावभ्यधावताम्। परमक्रुद्धो रामो मारीचस्य राक्षसस्योरसि मानवमस्त्रं चिक्षेप।

तेनास्त्रेण मारीचः सागरे क्षिप्तः। मारीचं सागरे क्षिप्तं दृष्ट्वा सुबाहोरुरस्याग्नेयास्त्रं रामो वेगेन चिक्षेप।

---

अंक ६



# संस्कृत-पाठ-माला ।

( संस्कृत-भाषाका अध्ययन करनेका सुगम उपाय )

## षष्ठ भाग ।


लेखक

पं. श्रीपाद दामोदर सातवळेकर

अध्यक्ष – स्वाध्यायमंडल, साहित्यवाचस्पति



सप्तम वार

संवत् २००७, शक १८७२, सन १९५१

# समास

संस्कृतमें 'समास' का प्रकरण विशेष महत्त्वका है। इस समास विषयका प्रारंभ इस भागमें किया है। पाठक यदि इस भागका विशेष अभ्यास करेंगे, तो उनको समासोंके साथ थोडासा परिचय हो जायगा।

आगेके भागोंमें यह समास-प्रकरण क्रमशः समाप्त किया जायगा।

इस भागमें जो संस्कृतके वाक्य दिये हैं, उनका विशेष अभ्यास पाठक करें, तथा फुरसतके समय उनको वारंवार पढते रहें।

ऐसा करनेसे पाठकोंको बहुत लाभ हो सकता है।


| स्वाध्याय-मण्डल | लेखक |
| --- | --- |
| किल्ला-पारडी (जि. सूरत) | श्रीपाद दामोदर सातवलेकर |



मुद्रक और प्रकाशक
वसंत श्रीपाद सातवलेकर, बी. ए.,
भारत मुद्रणालय, स्वाध्याय-मण्डल,
'आनन्दाश्रम' किल्ला-पारडी, (जि. सूरत)



# संस्कृत-पाठ-माला

## षष्ठो भागः

### पाठ १

यदि आपका इस समयतकका अभ्यास ठीक हो गया है, तो निम्नलिखित सरल संस्कृत आप समझ सकते हैं—

(१)

ततो दशरथो मिथिलामुपेयिवान् । जनकश्च पूजां कल्पयित्वैनमुवाच । दिष्ट्या प्राप्तोऽसि सह वसिष्ठेन । ददामि सीतां रामायोर्मिलां लक्ष्मणाय च ।

विश्वामित्रश्चोवाच । राजन् ! सदृशो धर्मसम्बन्धो रामस्य सीतया सह । अन्यच्च यवीयसो जनकभ्रातुः कुशध्वजस्यापि सुताद्वयमस्ति । भरतशत्रुघ्नयोः पत्न्यर्थं सुताद्वयमपि योग्यम् ।

वसिष्ठेनापि तदनुमतम् । जनकस्तु प्राञ्जलिरुवाच । धन्यं मन्ये मम कुलम् । यत उभावपि मुनिपुङ्गवौ युवामस्माकं कुलसम्बन्धं सदृशं ज्ञापयतः ।

एकेनैवाह्ना चत्वारो राजपुत्राः चतसृणां राजपुत्रीणां पाणीन् गृह्णन्तु ।

ततः सर्वाभरणभूषितां सीतां समानीयाग्नेः पुरस्तात्संस्थाप्य राजा राममब्रवीत् ।

'मे सुतेयं सीताऽद्य तव सहधर्मचारिणी प्रतीच्छैनां पतिव्रतां छायामिवानुगामिनीम् ।'

ततः सर्वे महर्षयः साधु साध्वित्यूचुः । लक्ष्मणं भरतं शत्रुघ्नं च तथैव क्रमेणोर्मिलया माण्डव्या श्रुतकीर्त्या च सह संयोजयामासुः । ते अग्निं त्रिः परिक्रम्य भार्या ऊहतुः । अथ रात्र्यां व्यतीतायां विश्वामित्र आपृष्ट्वा रामचन्द्रमुत्तरपर्वतं जगाम ।

राजा दशरथोऽपि मिथिलाधिपतिं जनकं पृष्ट्वाऽयोध्यानगरीमाशु प्रस्थितः ।

मार्गे तु क्षत्रियविमर्दनं जामदग्न्यं रामं दशरथो ददर्श, तदा दशरथः प्राञ्जलिर्भूत्वा 'अभयं देहि' इति तं प्रार्थयामास ।

अनादृत्य तद्वाक्यं राममेव जामदग्न्य उवाच । पश्याद्यैव मे पराक्रमम् । रामोऽपि धनुः सज्जीकृत्योवाच । ब्राह्मणोऽसि त्वम् । तस्माच्चे प्राणं न हरामि ।

ततो जामदग्न्यो महेन्द्रपर्वतं तपश्चरणं कर्तुं गतः । रामोऽप्ययोध्यां प्राप्तः ।

—०—

# पाठ २

पाठक इस पाठको वारवार पढें और कोई संदेह हुआ तो पूर्वभागमें येही वाक्य देखें । वहां येही वाक्य पदच्छेदपूर्वक दिये हैं। अब निम्नलिखित संस्कृत पाठ पढिये-

हे भारत ! तस्य वेश्मनो मध्ये नातिमहत् कपाटयुक्त-मज्ञातं भूम्याश्च समं बिलं चक्रे । पुरोचनभयादेव संवृतं मुखं न्यदधात् । स अशुभधीस्तस्य गृहद्वारि तु सदा वसति ।

हे नृप ! ते सर्वे पाण्डवेयाः साऽऽयुधाः क्षपां तत्र वसन्ति स्म । दिवा वनाद्वनं मृगयां चरन्ति स्म च ।

हे राजन् ! पुरोचनं वञ्चयन्तोऽविश्वस्ता विश्वस्तवदतुष्टा-स्तुष्टवत्परमविस्मिता ऊषुः ।

तस्मात्खनकसत्तमाद्विदुरामात्यादन्यत्र नगरवासिनो नरा एनान्नान्वबोधन्त । परिसंवत्सरोषितान्सुमनसस्ता-न्दृष्ट्वा विश्वस्तानिव संलक्ष्य पुरोचनो हर्षं चक्रे ।

तथा पुरोचने हृष्टे अथ कौन्तेयो धर्मविद्युधिष्ठिरो भीम-सेनार्जुनावुभौ यमौ च प्रोवाच ।

इसको वारंवार पढनेसे पाठक सुगमताके साथ समझ सकते हैं । इसमें कोई कठिनता नहीं है । जो वाक्य नहीं समझा है वह पुनः पुन पढने और विचार करनेसे समझमें आ जायगा। यदि किसी स्थानपर संदेह हुआ तो पूर्व भागमें देख लें । वहां येही वाक्य पदच्छेदपूर्वक दिये हैं, इसलिये

उनको देखनेसे सब संदेह निवृत्त हो सकते हैं। पाठक इसी प्रकार अपनी बुद्धि चलाते रहेंगे तो उनका प्रवेश संस्कृत भाषामें अति शीघ्र हो जायगा।

अब निम्नलिखित प्रश्नोंका उत्तर संस्कृतमेंही दीजिये—

१ दशरथः कुत्र उपेयिवान् ?
२ दशरथं दृष्ट्वा जनकः किं अवदत् ?
३ तदा विश्वामित्रः किं अब्रवीत् ?
४ राजपुत्राः कासां पाणिग्रहणं अकुर्वन् ?
५ सीतां अग्नेः पुरस्तात्संस्थाप्य राजा किं अब्रवीत् ?
६ रात्र्यां व्यतीतायां विश्वामित्रः कुत्र गतः ?
७ दशरथोऽपि कां नगरीं प्रस्थितः ?
८ मार्गे दशरथः कं ददर्श ?
९ तं दशरथः किं अब्रवीत् ?
१० जामदग्न्येन रामेण किं उक्तम् ?
११ तदा रामचन्द्रेण किं कृतम् ?
१२ जामदग्न्यः रामः कुत्र गतः ? किं कर्तुं गतः ?

इन प्रश्नोंके उत्तर पाठक संस्कृतमेंही दें। यदि कुछ कठिनता प्रतीत हुई तो पूर्व पाठ देख के। इस पाठमें प्रारंभमें जो वाक्य दिये हैं, उनको देखनेसेही इन प्रश्नोंके उत्तर स्वयं दिये जा सकते हैं।

—o—

## पाठ ३

इकारान्त नपुंसकलिंगी शब्दोंके रूप निम्नलिखित रीतिसे होते हैं-

| | |
|---|---|
| १ वारि -- जल | ४ वारिणे -- जलके लिये |
| (हे) वारि (हे) जल | ५ वारिणः - जलसे |
| २ वारि -- जलको | ६ ,, --जलका |
| ३ वारिणा -- जलसे | ७ वारिणि -- जलमें |

संस्कृत-वाक्य।

१ तत्र कूपे वारि अस्ति। २ सः वृषभः वारि तत्र पिबति। ३ अहं वारिणा स्नानं करोमि। ४ सः वारिणे कूपं गच्छति। तस्मात् वारिणः सः मण्डूकः अत्र आगच्छति। ६ तस्य वारिणः वर्णं पश्य।

भाषा-वाक्य।

१ उस कूपमें जल है। २ वह बैल जल वहां पीता है। ३ मैं जलसे स्नान करता हूं। ४ वह जलके लिये कूएंके पास जाता है। ५ उस जलसे वह मेंडक यहां आता है। ६ उस जलका रंग देख।

संस्कृत-वाक्यानि।

तव गृहे मञ्चकस्य उपरि मया तव पुस्तकं स्थापितं अस्ति। तव पुत्रः अश्वं कदा आरोहति इति त्वं जानासि

किम् ? शत्रून् निहत्य एव राज्यं प्राप्तुं शक्यं अस्ति न अन्यथा । यदा उपासनया ईश्वरस्य प्रसादः भवति तदा एव शाश्वतं सुखं भवति, इति निश्चयः एव अस्ति । यदा दशरथः अयोध्यायां राज्यं अकरोत् तदा तस्मिन् राष्ट्रे दुष्टः पापी चौरः वा न आसीत् । तत्र सर्वः अपि जनः सुखपूर्णः मुदितः ईश्वरभक्तः च आसीत् ।

यथा मूषकः वस्त्रं खादति तथा एव अन्नं अपि खादति एव । यथा मानवः जलं पिबति तथा रसं अपि पिबति एव । सः मनुष्यः आपणं गत्वा आम्रं सदा आनयति खादति च । सः सदा एव आम्रं खादति परन्तु कदाचित् अपि पुस्तकं न पठति । तस्मात् नगरात् त्वं कदा अत्र आगतः ?

यः मनुष्यः इन्द्रियाणि संयम्य ज्ञाननाशकं पापविचारं त्यजति सः एव महात्मा इति उच्यते । ऋषिः मन्त्रविचारं करोति, मुनिः मौनं धारयति, महर्षिः तपः करोति, मनुष्यः भोजनं करोति, योगी योगं आचरति ।

यदा वृक्षं कपिः आरोहति तदा त्वं किं करोषि ? कपिः मनुष्यवत् एव सर्वं व्यवहारं करोति, परन्तु सः पठनं मननं विचारं च कर्तुं न समर्थः भवति ।

वारिधौ क्षारं जलं भवति, कूपे मधुरं जलं भवति । नदी-जलं कदाचित् क्षारं कदाचित् मधुरं अपि भवति ।

## पाठ ४

मम कूपस्य जलं अतीव मधुरं अस्ति, न तथा तव कूपस्य। पुण्यकर्मकर्ता जनः स्वर्गं गच्छति न तथा पापकर्मकर्ता मनुष्यः। अतः त्वं धर्मस्य एव आचरणं कुरु। कदाचित् अपि धर्मस्य विरोधकं पापं न कुरु।

तव गुरोः गृहं कुत्र अस्ति कदा च सः तत्र भवति? मम गुरोः गृहं पुण्यनगरे संस्कृतपाठशालासमीपं एव अस्ति। स तत्र प्रातः सायं च भवति एव। दिवसस्य मध्यसमये न भवति। संस्कृतपाठशालां गत्वा शिष्यान् व्याकरणं पाठयति।

यदा मनुष्यः प्राणं धनं च त्यक्त्वा स्वराष्ट्रार्थं युद्धं करोति, तदा एव विजयं प्राप्नोति। सर्वस्वत्यागेन विना विजयः अशक्यः एव अस्ति।

युद्धसमये दुन्दुभिः शब्दं करोति, सैनिकः धावति, वीरः शस्त्रं गृहीत्वा अग्रे भवति। एवं सर्वत्र वीर्यं शौर्यं च भवति। तेन विजयः भवति।

ये वाक्य पाठक पढ़ें और इस प्रकार अनेक वाक्य करते रहें। यह अच्छा होगा यदि पाठक विविध वाक्य बनाकर कागजपर लिखते रहेंगे। जो जो शब्द आगये हैं उनका उपयोग करके अनेकानेक वाक्य बनानेसे संस्कृतमें अति शीघ्र गति हो सकती है।

संस्कृत-वाक्यानि।

१ अथ वृद्धस्य राज्ञः दशरथस्य एषा मतिः बभूव, यत् जीवति मयि रामः कथं राजा स्यात्। २ तं च समुदितैः गुणैः युक्तं समीक्ष्यः, सचिवैः सार्धं निश्चित्य च तस्य यौवराज्यं अमन्यत। ३ नानानागरिकान् पृथग्जानपदान् अपि समानिनाय। ४ ततः सर्वां परिषदं आमन्त्र्य वसुधाधिपः उवाच। ५ कृत्स्नस्य लोकस्य हितं चरत एव मम इदं शरीरं जरितं, अतः विश्रान्तिं अभिरोचये।

भाषा-वाक्य।

१ अब वृद्ध राजा दशरथकी यह बुद्धि हुई, कि [ जीवति मयि ] मेरे जीवित रहते हुए ही राम कैसे राजा होवे ? २ उसको श्रेष्ठ गुणोंसे युक्त देखकर और मन्त्रियोंके साथ निश्चय कर, उसके यौवराज्यका निश्चय किया। ३ नाना प्रकारके नागरिक और पृथक् पृथक् [ जानपदान् ] देशोंके जन [ अपि ] भी [ समानिनाय ] बुलाये। ४ पश्चात् सब [ परिषदं ] सभाको आमंत्रण देकर [ वसुधा-अधिपः ] राजा बोले। ५ [ कृत्स्न ] सब लोगोंका हित करते हुए ही मेरा यह शरीर [ जरितं ] बुड्ढा हो गया, इसलिये विश्रांति लेना [ अभिरोचये ] चाहता हूं।

—०—

# पाठ ५

१ श्रेष्ठः हि मम आत्मजः सर्वैः गुणैः। प्रातः यौवराज्ये तं नियोक्ता अस्मि, तद् अनुमन्यताम्। २ ते अपि तं ऊचुः। नृपते! ते सुतस्य बहवः कल्याणगुणाः। धर्मज्ञः, सत्यसन्धः, शीलवान्, अनसूयकः हि असौ। ३ विजितेन्द्रियः अपि सन् स्वजनवत् पौरान् नित्यं कुशलं पृच्छति। ४ नास्ति तस्य प्रसादः क्रोधश्च कदाचन निरर्थकः। ५ तस्मात् सर्वशत्रुदमनं इमं यौवराज्यस्थं वयं अपि द्रष्टुं इच्छामः।

भाषा-वाक्य।

१ श्रेष्ठही है मेरा (आत्म--जः) पुत्र सब गुणोंसे। प्रातःकाल यौवराज्यमें उसको नियुक्त करनेवाला हूं, उसके लिये अनुमति दें। २ वे भी उसे बोले। हे राजा! तेरे (सुतस्य) पुत्रके बहुत कल्याणमय गुण हैं। (असौ) यह धर्म जाननेवाला, सत्य (संध) प्रतिज्ञा करनेवाला, शीलवान् तथा (अन्-असूयकः) अनिन्दक है। ३ जितेन्द्रिय (सन्) होता हुआ भी, अपने जनोंके समान (पौरान्) पुरवासियोंसे नित्य कुशल पूछता है। ४ नहीं है उसकी (प्रसादः) प्रसन्नता और क्रोध (कदाचन) कभी भी निरर्थक। ५ इसलिये हम भी सब शत्रुओंका दमन करनेवाले इस रामको यौवराज्यपर (स्थं) बैठा हुआ देखना चाहते हैं।

